श्रीहरिकृष्णनिबन्धमणिमालायाः
अष्टमो (८) मणिः।

श्रीमदन्नम्भट्टविरचितः

# तर्कसंग्रहः

न्यायबोधिनी-पदकृत्य-विरलाव्याख्यात्रयोपेतः।

प्रकाशकः—
श्रीहरिकृष्णनिबन्धभवनम्
बनारस-सिटी।

श्रीगोकुलेश्वरप्रीत्यै तदीयजननोत्सवे ।
श्रीहरिकृष्णदासेन सदानन्दाभिलाषिणा ॥
विक्रमीय-युगवसुनवेन्दुमितशरदि सुतारे
स्थापितमिह शुभसहसि शुक्ल इनतिथिगुरुवारे ।
श्रीहरिकृष्णनिबन्धभवनमिति मणिमालाया
ग्रन्थनाय बुधजनविनोदमतिमङ्गलदायाः ॥

## प्रथमापरीक्षोपयोगिपाठ्यग्रन्थानां सूचीपत्रम्—

## लघुसिद्धान्तकौमुदी—

### संक्षिप्तबालबोधिनीटीकासहिता ।

प्रथमापरीक्षोपयोगि "संक्षिप्तबालबोधिनी" टीका-( वार्त्तिकपाठ-धातुपाठ-गण पाठ-सूत्रानुक्रमणिका-पाणिनीयशिक्षा सहित ) इस लघुकौमुदी में सूत्र बड़े टाईप में स्वतन्त्र पङ्क्ति में तथा वृत्ति पृथक् उसके नीचे दूसरी पङ्क्ति में छापी गई है । यह परीक्षोपयोगि संक्षिप्तबालबोधिनी टीका विद्यार्थियों के बड़े उपयोग की हुई है ।
मूल्य लागत मात्र सजिल्द उत्तम संस्करण ।॥) मध्यम संस्करण ॥=)

## सारस्वतम्—

### संक्षिप्तबालबोधिनीटीकासहितम् ।

इसमें भी लघुकौमुदी के अनुसार सूत्र स्वतन्त्र टाईप में तथा वृत्ति पृथक् पङ्क्ति में छापी गई है तथा समस्त कठिन २ स्थलों पर पं० नरहरिशास्त्रीजीकृत परीक्षोपयोगि संक्षिप्तबालबोधिनी टीका विद्यार्थियों के बड़े उपयोग की हुई है । साथ में १६ वर्षों के परीक्षा के प्रश्न पत्र तथा ग्रन्थ समाप्ति में सारस्वतकी संपूर्ण अष्टाध्यायी भी छपी है । इतने उपयोगि विषय सहित अत्युत्तम संस्करण पूर्वार्द्ध का मूल्य लागत मात्र ।=)

## सिद्धान्तचन्द्रिका—

### संक्षिप्तबालबोधिनीटीकासहिता ।

प्रथमापरीक्षोपयोगि "संक्षिप्तबालबोधिनी" टीका सहित इसमें भी लघुकौमुदी के अनुसार सूत्र स्वतन्त्र मोटे अक्षरों में तथा वृत्ति पृथक् पङ्क्ति में छपी है । इसकी भी संक्षिप्तबालबोधिनी टीका विद्यार्थियों के बड़े उपयोग की हुई है । मूल्य ॥।) है ।
इसका केवल उत्तरार्द्धभाग पृथक् भी मिलता है । मूल्य ॥)

---

प्राप्तिस्थानम्-श्रीहरिकृष्णनिबन्धभवनम् बनारस सिटी ।

SRI HARIKṚIṢNA NIBANDHA MAṆI MÂLÂ
NO. 8

# THE TARKASANGRAHA

Of

ANNAM BHATTA

*With*

*The Nyâyabodhini Commentary*
*Of*
*Pandit Goverdhanâchârya*
*The Padakritya of Pandit Chandraj Sinha*

AND

*Edited with*

*The Viralâ Commentary & Notes by*

NYÂYOPÂDHYĀYA KÂVYATIRTH
PANDIT DHUNDHIRÂJ S'ASTRI

PUBLISHED BY
S'ri Hari Krishna Nibandh Bhawan
BENARES

1933.

# अस्मत्प्रकाशित परीक्षापाठ्य-पुस्तक-सूचीपत्रम् ।

| | | रु० आ० |
|---|---|---|
| १. | सरलत्रिकोणमिति-चापीयत्रिकोणगणिते-सविशेषवासना-सहिते-द्वियुकपदसिद्धान्त-लघुरिक्थादि-नवीनसिद्धान्तप्रश्नादिसहिते | ३—० |
| २. | नीलाम्बरायगोलीयरेखागणितम्—नूतनवासनया, गोलबोधेन च समन्वितम् | ०—१२ |
| ३. | मुहूर्तचिन्तामणिः—पीयूषधारासहितः-नूतनगणितविषयोपपत्त्यादि-टिप्पणीसहितः | ३—० |
| ४. | मुहूर्तचिन्तामणिः—प्रमिताक्षरासहितः-नवीनगणितविषयोपपत्त्यादि-टिप्पणीसहितः | १—१२ |
| ५. | बृहज्जातकम्-भट्टोत्पलीयटीकासहितम् नवीनगणितविषयोपपत्त्यादि-टिप्पणीसहितम् | २—० |
| ६. | ताजिकनीलकण्ठी—विश्वनाथीयटीकोदाहरणसहिता—गणितविषयोपपत्त्यादिटिप्पणीविभूषिता च । | १—४ |
| ७. | लीलावती-मुरलीधरठक्कुरकृत-लीलावती-वासना-परिशिष्टप्रश्नादिसहिता। | २—८ |
| ८. | रेखागणितस्यैकादश-द्वादशाध्यायौ—ज्योतिर्विद्वर-श्रीकृष्णदत्तशर्म-कृतटीकासहितौ सविशेषटिप्पणीसमलंकृतौ | ०—१२ |
| ९. | शिशुबोधः-सविशेषटिप्पणीसहितः मू० ≡) १०. नाडिदत्तपञ्चविंशतिका | ०—१ |
| ११. | प्रतिभाबोधकम्—संस्कृतटीकासहितम् | ०—८ |
| १२. | मूलरामायणम्—( सुधाव्याख्यासहितम् ) अन्वय-व्याख्या-समास व्याकरण-वाच्यपरिवर्तन-कोश-सारार्थ-भाषार्थ-प्रश्नादिसहितम्। | ०—६ |
| १३. | मुद्राराक्षसनाटकम्-भावबोधिनीटीका-विस्तृतसमालोचनासहितम्। | २—० |
| १४. | फक्किकारत्नमञ्जूषा—प्रथमोभागः रु० २) द्वितीयोभागः २) संपूर्णः | ४—० |
| १५. | उभयाभावादिवारकपरिष्कारः—( सटीकः ) | ०—१२ |
| १६. | वैयाकरणभूषणसारः—सरलाटीकासहितः | १—८ |
| १७. | न्यायकुसुमाञ्जलिः—हरिदासीटीकाटिप्पणीयुतः | ०—८ |
| १८. | न्यायदर्शनम्—विश्वनाथवृत्ति-टिप्पणीविवृतियुतम् । | १—० |
| १९. | कारिकावली—पं० सूर्यनारायणशुक्लरचित-मयूखोद्भासितसिद्धान्त-मुक्तावलीसहिता । ( प्रत्यक्षखण्ड ) रु० ॥≡) संपूर्ण | १—४ |
| २०. | रसमञ्जरी—पं० श्रीबद्रीनाथशर्म्मकृत-सुरभिव्याख्याविभूषिता । | १—४ |
| २१. | श्रुतबोधः—श्रीसीतारामझाकृतया आशुबोधिनीसमाख्यव्याख्यया, तत्कृतसंक्षिप्तच्छन्दोगणितादिना च सहितः । | ०—६ |
| २२. | वाल्मीकिरामायणसुन्दरकाण्डम्—( रेशमी गुटका ) | ०—१२ |
| २३. | अमरकोशः—अनेकार्थध्वनिमञ्जरी—द्विरूपकोशैकाक्षरकोशैश्च सहितः। | ०—६ |
| २४. | बगलामुखीस्तोत्रम् । | ०—१ |

प्राप्तिस्थानम्-श्रीहरिकृष्णनिबन्धभवनम्-बनारस-सिटी ।

श्रीहरिकृष्णनिबन्धमणिमालायाः

अष्टमो (८) मणिः ।

श्रीमदन्नम्भट्टविरचितः

# तर्कसंग्रहः

सुधिप्रवरगोवर्धनाचार्यविरचितया "न्यायबोधिन्या"
मनिषिप्रकाण्डचन्द्रजसिंहकृतेन "पदकृत्येन" न्यायो-
पाध्याय काव्यतीर्थ पण्डितढुण्ढिराजशास्त्रिविनि-
र्मितया "विरलया" न्यायबोधिन्या विषम-
स्थलटिप्पण्या च समन्वितस्तेनैव
संशोधितश्च ।

प्रकाशकः—

श्रीहरिकृष्णनिबन्धभवनम्,

बनारस सिटी ।

सं० १९९०

# भूमिका ।

अस्ति तावत्संस्कृताध्ययनपराणां सर्वेषामपि श्रुतिगोचर एवायं न्यायवैशेषिकाख्ययोः समानमतयोर्दर्शनशास्त्रयोः पदार्थपरिचयहेतुस्तर्कसंग्रहनामा नैयायिकप्रवरश्रीमदन्नंभट्टविरचितो न्यायस्यादिमो ग्रन्थः। अस्य च रचयिता श्रोत्रियवंशावतंसो आन्ध्रदेशालंकारः 'श्रीमदन्नंभट्टः' ई १६०० षोडशशताब्द्यां तर्कभाषाकर्तुः केशवमिश्रस्य समये बभूवेति श्रूयते। अनेन पण्डितवरेण्येन कैयटव्याख्यानं तर्कसंग्रहः, तर्कसंग्रहदीपिका, तत्त्वबोधिनी टीका, तत्त्वचिन्तामण्यालोकसिद्धांजनं मिताक्षराख्या सूत्रानुसारिणी पाणिनीयसूत्रवृत्तिः, राणकोज्जीविनी ब्रह्मसूत्रवृत्तिश्च व्यरचीति श्रवणेनास्य महामतेः सर्वतन्त्रस्वातन्त्र्यं ज्ञायत इति विदुषां मतम्।

तर्कसंग्रहस्य टीकास्तट्टीका अप्यद्ययावत् न्यायबोधिन्यादयो मुम्बय्यादौ मुद्रितास्सर्वैरुपलभ्यन्त एव। तथापि परीक्षार्थिनामयथोपयोग इत्यालोच्याशेषशास्त्रसतृष्णान्तःकरणेन श्रीहरिकृष्णदासगुप्तमहोदयेन समुत्साहितोऽहमावश्यकविषयविशेषसंघातस्य संस्तवं समापादयन्तीं सहमुद्रितन्यायबोधिनीपदकृत्याख्यव्याख्याद्वयव्याख्यातविषयपौनरुक्त्यमपहरन्तीं नूतनोपपत्तिमयीं विरलाख्यां टीकां व्यदधाम्।

न्यायबोधिनी यथा छात्राणां नव्यन्याये व्युत्पत्तिमादधाति तथा जानन्त्येव विद्वांसः। एतस्या रचयिता गोवर्धनाचार्यः 'शृंगारोत्तमसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः' इति गीतगोविन्दे दर्शनात् जयदेवसमयात् पूर्वकालवर्तीति बुध्यते। जयदेवकविश्च लक्ष्मणसेनस्य राज्ञः १०१० शाकाब्दसमयेऽभूत् इति केचित्। अन्येतु १३०० शाकाब्दो जयदेवस्थितिकाल इति वदन्ति। वस्तुतस्तर्कभाषाटीकाऽऽरंभादिवाक्यदर्शनेन ईस्वीयसप्तदशशताब्दीमिते समयेऽयं राजपंडितो बभूवेति निर्धार्यते। पूर्वं मुम्बय्यादियंत्रालयेषु मुद्रिता न्यायबोधिनीटीकाः प्रायशः संशोधकानामप्रागल्भ्यादक्षरयोजकानां प्रमादाद्वा सर्वत्र त्रुटितपाठा इत्यस्माभिर्यथामति दोषस्यास्य निरासे प्रयत्नः कृत इति स्वयमेव ज्ञास्यन्ति पाठकाः।

पदकृत्यं च मूलस्थपदानां कृत्यं विदधदतीवोपकारि प्रवेशमिच्छतां नैयायिकछात्राणामिति सह मुद्रितम्। अस्य च कर्ता चंद्रजसिंहस्सिद्धान्तचंद्रोदयप्रणेतुर्विद्वच्छिरोमणेः कृष्णधूर्जटेः समकालीनस्तच्छिष्यो वाऽष्टादशशताब्द्यामासीदित्यनुमीयते।

व्याख्यानत्रयसमलंकृतेऽस्मिन् तर्कसंग्रहे कदाचित्प्रमादेनादूरदृष्टेर्मम मतेरायसाक्षरसंयोजकस्य दोषेण वा समुपजातान्यशुद्धिजातानि समाकलयन्तोऽपि दूषणवाचंयमा गुणग्राहिणो निसर्गसौहृदभावेन व्यवहरिष्यन्तीत्यायासे, प्रार्थये च तान् मदीयबुद्धिजन्मनां स्खलितानां सूचनेनानुकम्प्योऽहं येनाग्रिमसंस्करणे तेषामवकाशो न भवेदिति। स्तोकतोपि छात्राणामधिकारिणां चोपकृतिरेतेन स्याच्चेत्सर्वथा स्वपरिश्रमं सफलं मंस्यतेऽनेन तृतीयसंस्करणेन—

| सं० १९९० । मार्ग० शु० सप्तमी शुक्रवारे | } | विदुषामनुचरः श्रीढुण्ढिराजशास्त्री । |
|---|---|---|

सटिप्पण न्यायबोधिनी-पदकृत्य-विरलाख्य व्याख्यात्रयोपेतस्य तर्कसंग्रहस्य

# विषयानुक्रमणिका ।



## (४)कर्मादिलक्षणप्रकरणे ।



इति ।



श्रीः ।

सटिप्पणन्यायबोधिनी-पदकृत्य-विरलाख्यव्याख्यात्रयोपेतः

# तर्कसङ्ग्रहः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥ १ ॥

न्यायबोधिनी ।

अखिलागमसञ्चारि श्रीकृष्णाख्यं परं महः ॥
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति—निधायेति ॥ १ ॥

पदकृत्यम् ।

श्रीगणेशं नमस्कृत्य पार्वतीशङ्करं परम् ।
मया चन्द्रजासिंहेन क्रियते पदकृत्यकम् ॥ १ ॥
यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्माद्धितकरं वाक्यं वक्तव्यं विदुषा सदा ॥ २ ॥

विश्वेशं जगत्कर्तारं श्रीसाम्बमूर्तिं हृदि मनसि निधाय नितरां धारयित्वा गुरुव-

विरला ।

श्रीगुरुं स्फूर्तिदातारं नत्वा विघ्ननिवृत्तये ॥
तर्कसङ्ग्रहटीकां वै विरलां विदधाम्यहम् ॥ १ ॥

## [१] उद्देशप्रकरणम्।

पदार्थाः कति कानि च तेषां नामानि ?—

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः।**

---

न्यायबोधिनी।

अथ पदार्थान्विभजते—द्रव्येति। तत्र सप्तग्रहणं 'पदार्थत्वं द्रव्या-

पदकृत्यम्।

न्दनं च विधाय कृत्वेत्यर्थः। **बालेति**। अत्राधीतव्याकरणकाव्यकोशोऽनधीतन्यायशास्त्रो बालः। व्यासादावतिव्याप्तिवारणायाऽनधीतन्यायेति। स्तनन्धयेऽतिप्रसक्तिवारणायाऽधीतव्याकरणेति। **सुखेति**। सुखेनानायासेन बोधाय पदार्थतत्त्वज्ञानायेत्यर्थः। तर्क्यन्ते प्रमितिविषयीक्रियन्ते इति तर्का द्रव्यादिपदार्थास्तेषां सङ्ग्रहः संक्षेपेणोद्देशलक्षणपरीक्षा यस्मिन् स ग्रन्थः। नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः, यथा द्रव्यं

विरला।

**निधायेति(१)**। स्पष्टोऽर्थः।

ननु सत्सु बहुषु न्यायग्रन्थेषु किमर्थमयमपूर्व आरम्भ इत्यत आह **बालेति**। बालत्वं पदकृत्ये द्रष्टव्यम्। तथाच तादृशबालानां पूर्वनिर्मितग्रन्थेषु दुर्बोधत्वान्न व्युत्पत्तिरिति अन्नंभट्टस्यायमायास इति बोध्यम्। कस्मै प्रयोजनायेत्यत आह **सुखेति**। **क्रियत इति**। मयेति शेषः, तथाच मत्समेवतकृतिविषयस्तर्कसङ्ग्रह इति वाक्यार्थः।

अथवा सुखं दुःखध्वंसरूपो मोक्षस्तदर्थं बोधो ज्ञानं तस्मै मोक्षप्रयोजनकतत्त्वज्ञानाय, सम्यक् गृह्यन्ते बोध्यन्तेऽनेनेति सङ्ग्रहः तर्काणां द्रव्यादीनां सङ्ग्रहः ज्ञानजनकः, मोक्षप्रयोजकीभूतपदार्थविषयकतत्त्वज्ञानसम्पादकोऽयं तर्कसङ्ग्रहनामा ग्रन्थः क्रियत इति। अनया कारिकया शिष्यशिक्षार्थं ग्रन्थादौ मङ्गलकरणं युक्तमिति पूर्वार्द्धेन प्रदर्श्योत्तरार्द्धे प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजनाधिकारिसम्बन्धरूपमनुबन्धचतुष्टयमपि प्रदर्शितवान् ग्रन्थकारः। तथाहि—तर्कपदेन तर्कविषयद्रव्यादिसप्तपदार्थरूपो विषयः,

---

(१) अत्र निधानं ज्ञानविशेषः, विश्वेशमिति द्वितीयार्थो विषयत्वम्, तथाच विश्वेशविषयकमनोजन्यज्ञानविशेषोत्तरकालीना या कृतिरिति केचित्। तन्न, ज्ञानमात्रस्य मनोजन्यत्वेन तदर्थकहृदीत्यस्याव्यावर्तकतापत्तेः, किन्तु हृत्पदं तद्रूपशरीरावयवपरम्। निधानं धात्वर्थः, तच्चावस्थापनम्, तथाचावस्थितत्वप्रकारकाहार्यज्ञानोत्तरकालीना या कृतिरित्यन्वयबोधः। हृदीति सप्तम्यर्थो निरूपितत्वं, तस्यावस्थितत्वेऽन्वयः, विश्वेशमितिद्वितीयार्थो विशेष्यत्वम्, एवं च विश्वेशविशेष्यकहृदयनिरूपितवृत्तित्वप्रकारकाहार्यज्ञानोत्तरकालीना कृतिरित्यन्वयबोधः।

द्रव्याणि कति, कानि च तानि ?—

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।**

न्यायबोधिनी ।

दिसप्तान्यतमत्वव्याप्यमि'ति व्याप्तिलाभाय । ननु शक्तिपदार्थस्याष्टमस्य सत्त्वात्कथं सप्तैवेति ? तथाहि—मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे दाहो न जायते, तच्छून्ये तु जायते, अतो मणिसमवधाने शक्तिर्नश्यति मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति कल्प्यते, तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेत् । (न) मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तितद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात्, तस्मात्सप्तैव पदार्था इति सिद्धम् ।

द्रव्याणि विभजते—पृथिवीति । नन्वन्धकारस्य दशमद्रव्यस्य स-

पदकृत्यम् ।

गुणा इति । असाधारणधर्मो लक्षणम्, यथा गन्धवत्त्वं पृथिव्याः । लक्षितस्य लक्षणं सम्भवति न वेति विचारः परीक्षा । अत्रोद्देशस्य पक्षज्ञानं फलं, लक्षणस्येतरभेदज्ञानं, परीक्षाया लक्षणे दोषपरिहार इति मन्तव्यम् ॥ १ ॥

तत्रेति । तत्र सप्तपदार्थमध्ये इत्यर्थः । द्रव्याणि नवैवेत्यन्वयः । एवं तत्रेतिपदं

विरला ।

बोधपदेन पदार्थतत्त्वज्ञानं प्रयोजनम्, बालपदेन तज्ज्ञानलिप्सुरधिकारी, तर्कसङ्ग्रहपदेन द्रव्यादिविषयाणां तर्कसङ्ग्रहग्रन्थस्य च प्रतिपाद्यप्रतिपादकभावरूपः सम्बन्धश्च सूचितः । इत्थं च किमर्थमयमादिमः श्लोक इति प्रश्नस्येदमुत्तरं बोध्यम् ॥ १ ॥

"त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा च" इति न्यायवात्स्यायनभाष्यकारसंमत्योद्देशस्यैवादौ कर्तुमुचितत्वात्तत्पुरस्कारेण पदार्थान्विभजते द्रव्येति । अत्रेयमाशङ्का—पदार्था इति उद्देशान्तरं 'उद्दिष्टस्य लक्षणं लक्षितस्य विभाग इति' नयेन लक्षणं विहाय कथं विभागकथनमिति । अत्र केषाञ्चित् उत्तरम्—तर्कसङ्ग्रह इति वाक्यघटकीभूततर्कपदेन तल्लक्षणस्योक्तप्रायत्वात्, तथाहि तर्क्यन्ते ज्ञायन्ते इति व्युत्पत्त्या तर्कपदेन द्रव्यादिपदार्था उच्यन्ते तेन ज्ञेयत्वं पदार्थसामान्यलक्षणं लभ्यत इति । अन्नंभट्टस्तु पदार्थपदेनैव पदस्यार्थः पदार्थ इति व्युत्पत्त्याऽभि-

कति गुणाः के च ते ?—

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वा-परत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः ।**

न्यायबोधिनी ।

त्वात्कथं नवैवेति ? तथाहि— 'नीलं तमश्चलती'ति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च तमसो द्रव्यत्वं सिद्धम् । न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम् । तमसो रूपवत्त्वात् आकाशादिपञ्चकस्य वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः । तमसो निर्गन्धत्वात् पृथिव्या गन्धवत्त्वान्न पृथिव्यामन्तर्भावः । तमसो निःस्पर्शत्वात् जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः । तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेत् । न, तमसस्तेजोऽभावरूपत्वेनैवोपपत्तावतिरिक्ततत्कल्पनायां मानाभावात् । न च विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमास्त्विति वाच्यम् । तेजसोऽ-

पदकृत्यम् ।

चतुर्विंशतिर्गुणा इत्यादिनाऽप्यन्वेति । द्रव्यत्वजातिमत्त्वं गुणवत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम् ।

विरला ।

धेयत्वादि पदार्थसामान्यलक्षणं सूचितमिति न विभागोऽयुक्त इति समाश्वत्तेति बोध्यम् ।

उक्तरीत्योद्देशपूर्वकं द्रव्याणि विभजते **तत्रेति** । अत्रापि पूर्वरीत्या लक्षणं विना विभागोऽनुपपन्न इत्या**शङ्कायाम्, उत्तरम्**—प्रागवदेव द्रव्यपदेन द्रव्यत्वजातिमत्त्वादिरूपलक्षणं बोध्यम् । एतत्सूचनायैव पदकृत्ये द्रव्यसामान्यलक्षणान्युक्तानि । तत्र द्रव्यत्वजातावेव किं प्रमाणम् ? इति **शङ्कायां**, द्रव्यं द्रव्यमिति प्रत्यक्षं, द्रव्यनिष्ठा समवायिकारणता किंचिद्धर्मविशिष्टा कारणतात्वाद्दण्डनिष्ठघटकारणतावदित्यनुमानं च द्रव्यत्वजातिसाधकं प्रमाणमित्यु**त्तरं** द्रष्टव्यम् ।

तथैव गुणान्विभजते **रूपेति** । द्रव्यसामान्यमात्रवृत्तित्वं गुणसामान्यलक्षणम् । तच्च द्रव्येतरवृत्तितानवच्छेदकद्रव्यसामान्यवृत्तितावच्छेदकपदार्थविभाजकोपाधिमत्त्वं बोध्यम् । तेन लक्षणं विना विभागानुपपत्तिशङ्काव्यावृत्तिः । तत्र च गुणत्वजातिसा-

कियन्ति कर्माणि कानि च तानि ?—

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ।**

सामान्यं कतिविधं ?—

**परमपरं चेति द्विविधं सामान्यम् ।**

---

न्यायबोधिनी ।

भावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात् । तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् । तमसि नील-

षदकृत्यम् ।

**परमपरं चेति** । परसामान्यमपरसामान्यमित्यर्थः । परत्वं चाधिकदेशवृ-त्तित्वम् । अपरत्वं न्यूनदेशवृत्तित्वम् ।

तदेव हि लक्षणं यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम् , यथा गोः सास्ना-

विरला ।

धकं किं मानमित्याशङ्कायाम् ,—अयं गुण इति प्रत्यक्षं, द्रव्यकर्मभिन्ने सामान्य-वति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्याद्यनुमानं वा गुणत्वजातौ मानमिति **उत्तरं** देयम् । **अत्र पूर्वपक्षः**—लघुत्वआलस्यमृदुत्वकठिनत्वानां कथं न गुणमध्ये पाठ इति । **समाधानम्**—लघुत्वं गुरुत्वाभावः, आलस्यं कृत्य-भावः, मृदुत्वं कठिनत्वं च संयोगविशेष इति नाधिकगुणशङ्कापिशाचीप्रसर इति ।

**चतुर्विंशतिर्गुणा इति । अत्र शङ्का**—गुणे गुणानङ्गीकारात्कथं चतुर्विंश-तिसंख्यायोगः—इति । **उत्तरम् ।** उपचारादयं प्रयोगः—मुख्ये बाधकसद्भावे ह्युप-चारः कल्प्यते, स च निमित्तापेक्ष इत्यसाधारणधर्मयोगो निमित्तम् , यत्र संख्योप-लब्धा तत्रासाधारणधर्मयोगोऽपीति ।

कर्माणि विभजते **उत्क्षेपणेति** । अत्राप्युक्तविधविभागा**शङ्कायां** कर्मत्वजा-तिमत्त्वलक्षणपूर्वकस्यैव विभागस्य सत्त्वा**दुत्तरं** बोध्यम् । कर्मत्वजातौ किं मानमि-त्याक्षेपे, क्रियामात्रस्य प्रत्यक्षत्वात्तद्गतजातौ प्रत्यक्षमेव प्रमाणमिति **समाधानं** बोध्यम् । भ्रमणादिभिः कर्मणामाधिक्यं कुतो नेति **पूर्वपक्षे**, उक्तेष्वेव कर्मसु भ्रम-णादीनामन्तर्भाव इति **समाधानं** स्वयमेव वक्ष्यति ।

सामान्यं विभजते **परमिति । अत्र शङ्का**—नन्वत्र कथं लक्षणं ? सामा-न्यस्य जातिशून्यत्वाज्जातिघटितलक्षणासम्भवात् , तथा च लक्षणाभावे कथं विभाग-

कियन्तो विशेषाः ?—

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।**

समवायः कतिविधः ?—

**समवायस्त्वेक एव ।**

अभावः कतिविधः ?—

**अभावश्चतुर्विधः-प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ।**

न्यायबोधिनी ।

त्वादिप्रतीतिस्तु भ्रान्तिरेव । एवं कर्मवत्ताप्रतीतिरपि, दीपापसरणक्रियाया एव तत्र भानात् ।

पदकृत्यम् ।

दिमत्वम् । अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम्, अत एव गोर्न कपिलत्वं लक्षणं तस्याव्याप्तिग्रस्तत्वात् । अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्, अत एव गोर्न शृङ्गित्वं लक्षणं तस्यातिव्याप्तिग्रस्तत्वात् । असम्भवश्च लक्ष्यमात्रावृत्तित्वम्, यथा गोरे-

विरला ।

इति । **उत्तरम्**—स्वयमेवाग्रे लक्षणस्य वक्ष्यमाणत्वान्नाऽत्र तदपेक्षेति न विभागानवकाशशङ्कावसरः । एवमग्रेऽपि । अथवा अत्रापि समानानां भावः सामान्यम् इति व्युत्पत्त्या सामान्यपदेनैवानुवृत्तिप्रत्ययहेतुत्वरूपं लक्षणं सूचितमित्यदोषः ।

विशेषं विभजते **नित्यद्रव्येति** । पृथिव्यादिचतुष्टयपरमाणवो आकाशादिपञ्चकञ्च नित्यद्रव्याणि तद्वृत्तय इत्यर्थः । अत्रापि सामान्यवत् अनन्तत्वरूपविभागाशङ्कायां विशेषयन्ति व्यावर्तयन्ति ते विशेषा इति व्युत्पत्तिलब्धं व्यावर्तकत्वरूपं लक्षणमस्त्येवेति न विभागानवसर इति वैकल्पिकमुत्तरं बोध्यम् । सामान्यविशेषादिरूपाप्रत्यक्षपदार्थाङ्गीकारे प्रयोजनं तत्तत्पदार्थवर्णनावसरे वक्ष्यामः ।

समवायं विभजते **समवायस्त्विति** । अत्रापि समवैति नित्यं सम्बध्नाति इति व्युत्पत्तिवशात्समवायपदमेव नित्यसम्बन्धत्वरूपलक्षणपरमिति विभागाशङ्काया द्वितीयमुत्तरं बोध्यम् ।

अभावं विभजते **अभाव इति** । अत्राग्रेऽभावसामान्यलक्षणस्य ग्रन्थकृताऽनिर्देशादनेनैवाभावपदेन भावभिन्नत्वरूपं सामान्यलक्षणं सूचितमिति न लक्षणं विना विभागानवसरशङ्केति बोध्यम् ।

## [२] द्रव्यलक्षणप्रकरणम् ।

पृथिव्याः किं लक्षणं, कति च भेदाः ?—

**तत्र गन्धवती पृथिवी । सा द्विविधा—नित्याऽनित्या च । नित्या-परमाणुरूपा । अनित्या-कार्यरूपा । पुनस्त्रिविधा-शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥**

---

न्यायबोधिनी ।

गन्धवतीति । गन्धवत्त्वं पृथिव्या लक्षणम् । लक्ष्या पृथिवी । पृथिवीत्वं लक्ष्यतावच्छेदकम् । पृथिवीत्वावच्छिन्ना लक्ष्यता, यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः । यो धर्मो यस्यामवच्छेदकः सा तद्धर्मावच्छिन्ना ( इति न्यायात् ) । तथाच लक्ष्यतावच्छेदकं

पदकृत्यम् ।

कशफवत्त्वं न लक्षणं तस्यासम्भवग्रस्तत्वात् । नित्येति । ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम् । ध्वंसेऽतिव्याप्तिवारणाय ध्वंसभिन्नेति विशेषणम् । घटादावतिव्याप्तिवारणाय विशेष्यदलम् । ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वाऽनित्यत्वम् । शरीरेति । यद्भोगायतनं तदेव शरीरं, चेष्टाश्रयो वा । इन्द्रियमिति ।

विरला ।

उद्देशक्रमानुसारेण लक्षणं वक्तुमारभते गन्धवतीति । गन्धवत्त्वं समवायेन बोध्यम् , तेन कालिकादिसम्बन्धेन कालादौ गन्धसत्त्वेऽपि नातिव्याप्तिः । परमाणुरूपेति । अत्रेयमाशङ्का—परमाणुसद्भावे किं मानमिति । उत्तरम्—गवाक्षरन्ध्रे यत्सूर्यकिरणस्थं सूक्ष्मं रज उपलक्ष्यते तत्त्र्यणुकमभिधीयते, तच्च सावयवं चाक्षुषत्वाद्घटवदित्यनुमानेन त्र्यणुकावयवद्व्यणुकसिद्धौ, द्व्यणुकः सावयवः महदारम्भकत्वात् कपालवदित्यनुमानेन द्व्यणुकावयवः परमाणुः सिध्यति । अग्रे तदवयवधाराङ्गीकारेऽनवस्थापातान्मेरुसर्षपसाम्यं स्यादिति । कार्यरूपेति । अवयविरूपेत्यर्थः । अत्र पूर्वपक्षः—परमाणुपुञ्जैरेवायं घट इति प्रतीत्युपपत्तेरवयविनि किं प्रमाणमिति । तत्र समाधानम्—परमाणूनामतीन्द्रियत्वेन घटस्याप्यतीन्द्रियत्वात् प्रत्यक्षं न स्यादिति बोध्यम् । शरीरेति । तथाचान्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरस्य लक्षण-

जलस्य किं लक्षणं कति च भेदाः ?—

**शीतस्पर्शवत्य आपः । ता द्विविधाः—नित्या अनित्याश्च । नित्याः—परमाणुरूपाः । अनित्याः-कार्यरूपाः । पुनस्त्रिविधाः—शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥**

न्यायबोधिनी ।

**पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना । (१)गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम् । एवं शीतस्पर्शवत्वादिलक्षणेषु जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम् ।**

पदकृत्यम् ।

चक्षुरादावतिव्याप्तिवारणाय गन्धग्राहकमिति । कालादावतिप्रसक्तिवारणायेन्द्रियमिति । **विषय इति** । शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः । शरीरादावतिव्याप्तिनिरासाय सत्यन्तम् । परमाण्वादावतिव्याप्तिवारणाय विशेष्यदलम् । कालादिवारणाय जन्यत्वे सतीत्यपि बोध्यम् ।

**शीतेति** । तेजआदावतिव्याप्तिवारणाय शीतेति । आकाङ्क्षावारणाय स्पर्शेति ।

विरला ।

म् । हस्तादिवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यम् । **इन्द्रियमिति** । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । तथाहि—शब्देतरे ये उद्भूतविशेषगुणाः घटादिनिष्ठरूपादयस्तदनाश्रयत्वमथ च ज्ञानस्य कारणीभूतो यो मनःसंयोगस्तदाश्रयत्वं च चक्षुरादावस्तीति लक्षणसमन्वयः । आत्मवारणाय सत्यन्तम् । कालवारणाय विशेष्यम् । श्रोत्रेऽव्याप्तिवारणाय शब्देतरेति । चक्षुरादावनुद्भूतरूपसत्त्वादव्याप्तिवारणायोद्भूतेति । इन्द्रियार्थसंयोगस्य द्विनिष्ठतया तदाश्रयत्वस्य चक्षुरादौ सत्त्वादव्याप्तिनिरासाय विशेषपदम् । स्वध्वंसकारणीभूतं कालमनःसंयोगस्तदाश्रयत्वं काल इति ज्ञानपदम् ।

(१) तनावुद्भूतगन्धे पाषाणादौ उत्पत्तिकालावच्छिन्ने घटादौ वा नाव्याप्तिरिति जातिघटितलक्षणस्य प्रयोजनं बोध्यम् ।

तेजसः किं लक्षणं कति च भेदाः ?—

उष्णस्पर्शवत्तेजः । तच्च द्विविधम्—नित्यमनित्यं च । नित्यं—परमाणुरूपम् । अनित्यं—कार्यरूपम् । पुनस्त्रिविधं—शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधो—भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अबिन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम्(१) । आकरजं सुवर्णादि ॥

वायोः किं लक्षणं कति च भेदाः ?—

रूपरहितस्पर्शवान्वायुः । स द्विविधः—नित्योऽनित्यश्च । नि-

पदकृत्यम् ।

कालादावतिप्रसक्तिवारणाय समवायसम्बन्धेनेति पदं देयम् । **इन्द्रियमिति** । त्वगादावतिव्याप्तिवारणाय रसग्राहकमिति । रसनेन्द्रियरससंनिकर्षादावतिव्याप्तिनिरासायेन्द्रियमिति । **सरिदिति** । आदिना तडागहिमकरकादीनां सङ्ग्रहः ।

**उष्णेति** । जलादावतिव्याप्तिनिरासायोष्णेति । कालादावतिप्रसङ्गवारणाय समवायसम्बन्धेनेति पदं देयम् । **इन्द्रियमिति** । घ्राणादावतिव्याप्तिवारणाय रूपग्राहकमिति । कालदावतिव्याप्तिनिरसनायेन्द्रिमिति । भेदादितिपदं प्रत्येकमभिसम्बध्यते । **भौममिति** । आदिपदेन खद्योतगततेजःपरिग्रहः । **विद्युदादीति** । आदिनाऽर्कचन्द्रादीनां परिग्रहः । **भुक्तेति** । भुक्तस्यान्नादेः पीतस्य जलस्य परिणामो जीर्णता तस्य हेतुरुदर्यमित्यर्थः । **सुवर्णेति** । आदिना रजतादिपरिग्रहः ।

विरला ।

**भौममिति** । पार्थिवमात्रेन्धनं तेजो भौममित्यर्थः । **अबिन्धनमिति** । अद्भिरिन्ध्यते प्रकाश्यते इत्यबिन्धनम् । पार्थिवजलोभयेन्धनं तेज उदर्यं तदेवाह **भुक्तस्येति** । **आकरजमिति** । अनुभयेन्धनं तेज आकरजमित्यर्थः । **अत्रेयं शङ्का**—ननु सुवर्णं तैजसमसति प्रतिबन्धकेऽत्यन्ताग्निसंयोगेप्यनुच्छिद्यमानद्रवत्ववत्वात् यन्नैवं तन्नैवं यथा घृतमिति व्यतिरेक्यनुमानेन सुवर्णस्य तैजसत्वसिद्धेरप्रत्यूहत्वादिति ।

(१) औदर्यमिति पाठान्तरम् ।

त्यः परमाणुरूपः। अनित्यः—कार्यरूपः। पुनस्त्रिविधः—शरीरे-

न्यायबोधिनी।

एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति—रूपरहित इति रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। सतिसप्तम्या विशिष्टार्थकतया सामानाधिकरण्यसम्बन्धेन रूपत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम्। विशेषणांशानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः तत्रापि स्पर्शवत्त्वसत्त्वादतस्तद्वारणाय विशेषणोपादानम्। तावन्मात्रोपादाने आकाशादावतिव्याप्तिः तत्रापि रूपरहितत्वसत्त्वादतस्तद्वारणाय विशेष्योपादानम्। (१)अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम्, यथा गोः शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात्। अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम्, लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतकचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः, यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यताव-

पदकृत्यम्।

रूपेति। घटादिवारणाय विशेषणम्। आकाशादिवारणाय विशेष्यम्। इन्द्रि-

विरला।

रूपरहितेति। रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणमित्यर्थः। घटादिवारणाय विशेषणम्। आकाशादिवारणाय विशेष्यम्। अनेन पदकृत्यपूर्वकं वायोर्लक्षणं प्रदर्शयेत्यस्योत्तरं बोध्यम्। अत्रेयं शङ्का—ननु रूपरहितो वायुर्नाम द्रव्यमस्तीत्यत्र किं मानमिति। अत्र प्राञ्चः—विषयतासम्बन्धेन बहिर्द्रव्यप्रत्यक्षमात्रे रूपस्पर्शयोः कारणत्वात्तदभावान्न प्रत्यक्षं प्रमाणम्, किन्तु योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शः प्रतीयते स पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः गुणत्वात् रूपवदिति परिशेषानुमानम्। पृथिव्याद्यनाश्रितत्वं च—उक्तस्पर्शः न पृथिवीमाश्रितः उद्भूतस्पर्शवत्पार्थिवस्योद्भूतरूपवत्तानियमात्। न जलतेजसी अनुष्णाशीतस्पर्शवत्त्वात्।

---

(१) वायुलक्षणे विशेषणानुपादानेऽतिव्याप्तिरित्युक्तं तत्रातिव्याप्त्यादिपदार्थज्ञानार्थमतिव्याप्तिर्नामेति।

न्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ॥

न्यायबोधिनी ।

च्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिस्तत्र नीलरूपाभावात् । असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणाभावम्, यथा गोरेकशफवत्त्वं लक्षणं कृतं चेत् गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वादसम्भवः । अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणानि तु—लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः । अव्याप्तिस्तु लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । असम्भवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ।

पदकृत्यम् ।

यमिति । चक्षुरादिवारणाय स्पर्शग्राहकमिति । कालादावतिव्याप्तिवारणायेन्द्रियमिति । वृक्षेति । आदिपदेन जलादिपरिग्रहः । शरीरान्तरिति । महावाय्वादावतिव्याप्तिवारणाय विशेषणम् । मनआदिवारणाय विशेष्यम् । धनंजयवारणाय सञ्चारीति । उपाधीति । मुखनासिकाभ्यां निर्गमनप्रवेशनात्प्राणः, जलादेरधोनयनादपानः, भुक्तपरिणामाय जाठरानलस्य समुन्नयनात्समानः, अन्नादेरूर्ध्वनयनादुदानः, नाडीमुखेषु वितननाद्व्यानः, इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियत इत्यर्थः ।

विरला ।

न विभुचतुष्टयं सर्वत्रोपलम्भापत्तेः । न मनः तस्यातीन्द्रियत्वेन स्पर्शस्यातीन्द्रियत्वापातात् इत्याद्यनुमानैर्बोध्यमित्याहुः । बहिर्द्रव्यप्रत्यक्षमात्रे न किञ्चित्कारणं किन्तु चाक्षुषे रूपं स्पार्शने स्पर्शस्तथा च प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्यक्षसम्भवाद्वायौ प्रत्यक्षमेव प्रमाणमिति नवीनानामुत्तरं बोध्यम् ।

ननु प्राणस्य कुत्रान्तर्भाव ? इत्याशङ्कायामुत्तरम्—शरीरान्तरिति । तथाच विषयवायौ तस्यान्तर्भाव इत्यर्थः । ननु तथाप्यपानादिरतिरिक्तः स्यादित्याशङ्कायामाह

आकाशस्य किं लक्षणं कतिविधं च तत् ?—

**शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ॥**

---

न्यायबोधिनी ।

**आकाशं लक्षयति**—शब्दगुणकमिति । **अत्र गुण(१)पदमाकाशे शब्द एव विशेषगुण इति द्योतनाय न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् । तदुक्तम्—**

**रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।**
**बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥ इति ।**

**(२)**तच्चैकमिति । **अनेकत्वे मानाभावादिति भावः** । विभ्विति । **सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं च क्रियावत्त्वम् । पृथिव्यप्तेजोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशेतिपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ।**

पदकृत्यम् ।

**शब्देति** । शब्दो गुणो यस्य तत्तथा । असम्भववरणाय शब्दगुणोभयम् । **विभ्विति** । सर्वमूर्तद्रव्यसयोगीत्यर्थः ।

विरला ।

**स चेति । उपाधिभेदादिति** । हृदादिस्थानरूपोपाधिभेदादित्यर्थः । स च—"हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ।" इति अमरकोशोक्तो विज्ञेयः । क्रियारूपोपाधिस्तु पदकृत्ये द्रष्टव्यः ।

**शब्दगुणकमिति** । अन्नंभट्टमते शब्दस्य द्रव्यत्वात्तन्निरासाय गुणपदमन्यथा शब्दवत्त्वमात्रलक्षणस्य सम्यक्त्वात्तद्वैयर्थ्यापत्तेरिति । **अत्रेयमाशङ्का**—किं तावदाकाशद्रव्यसद्भावे प्रमाणमिति । **उत्तरम्**—शब्दगुणकमनुमानमेव तत्र प्रमाणम्, तथाहि—शब्दो गुणः अनित्यत्वे सत्येकेन्द्रियग्राह्यजातीयत्वात् रूपवदित्यनुमित्या शब्दस्य गुणत्वे सिद्धे शब्दोऽष्टद्रव्यानाश्रितः श्रोत्रग्राह्यत्वात् शब्दत्ववत् इत्यनुमानेनाष्टद्रव्यगुणत्वाभावे च सिद्धे शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति गुणत्वात् इति परिशेषानुमानेनाऽऽकाशरूपद्रव्यसिद्धिरिति ।

---

(१) शब्दस्य द्रव्यत्वं वदतां मीमांसकानां मतस्यापाकरणार्थं गुणपदं नतु गुणवत्त्वं लक्षणघटकं प्रयोजनाभावादिति केचित् ।

(२) आकाशस्यं विभागाभावं द्योतयितुमाह तच्चैकमिति ।

कालस्य किं लक्षणं कति च भेदाः ?—

**अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥**

दिशः किं लक्षणं कतिविधा च सा ?—

**प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका नित्या विभ्वी च ॥**

---

न्यायबोधिनी—

**कालं लक्षयति**—अतीतेति । व्यवहारहेतुत्वस्य लक्षणत्वे घट इति व्यवहारहेतुभूतघटादावतिव्याप्तिः, तद्वारणाय अतीतादीति(१) विशेषणोपादानम् ।

**दिशो लक्षणमाह**—प्राच्येति । उदयाचलसंनिहिता या दिक् सा

पदकृत्यम्—

**अतीतेति** । अतीत इत्यादिर्यो व्यवहारोऽतीतो भविष्यन्वर्तमान इत्याद्यात्मकस्तस्यासाधारणहेतुः काल इत्यर्थः । नन्विदं लक्षणमाकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वादिति चेत् । न, अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात् । न चैवं कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम् । विभुत्वस्यापि निवेशात् ।

**प्राचीति** । इयं प्राचीयमवाचीयं प्रतीचीयमुदीचीत्यादिव्यवहारासाधारणं कारणं

विरला ।

**अतीतेति** । अत्रायं पूर्वपक्षः—कालद्रव्ये किं प्रमाणमिति । उत्तरम्—मैत्रादिशरीरवृत्तिपरत्वापरत्वादि सासमवायिकारकम् भावकार्यत्वादित्यनुमानेन तयोरसमवायिकारणस्यावश्यकत्वात्स च कालपिण्डसंयोग एवेति तदाश्रयतया कालसिद्धिरिति बोद्धव्यम् ।

**प्राचीति** । अत्रापि पूर्ववद्दिग्द्रव्ये किं प्रमाणमिति शङ्कायामुक्तरीत्यैव दैशिकपर-

---

(१) तथा चातीतः वर्तमानः भविष्यतीति शब्दप्रयोगे कालः कारणम्, शब्दप्रयोगश्च व्यवहारः, व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात्, यथा 'घट' इति शब्दप्रयोगे घटो व्यवहर्तव्यः घटत्वं व्यवहर्तव्यतावच्छेदकं तस्य घटशब्दप्रयोगे कारणत्वम्, तथा प्रकृतेऽप्यतीतः अतीतकालवान् वर्तमानः वर्तमानकालवान् भविष्यन् भविष्यत्कालवान् इत्यर्थः । तथाचातीतशब्दो अतीतकालवान् व्यवहर्तव्यः अतीतकालत्वं व्यवहर्तव्यतावच्छेदकम् । अतीतकालवत्त्वं चातीतकाल एव । एवं वर्तमानस्थलेऽपि । एवं चातीतादिशब्दप्रयोगेऽतीतादिकालस्य हेतुत्वमित्यतीतादिव्यवहारकारणत्वस्य घटेऽसत्त्वान्नातिव्याप्तिरिति भाव

आत्मनः किं लक्षणं, कतिविधश्च सः ?—

**ज्ञानाधिकरणमात्मा । स द्विविधः-जीवात्मा परमात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मा एक एव । जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥**

न्यायबोधिनी ।

**प्राची** । अस्ताचलसंनिहिता या दिक्सा प्रतीची । मेरोः संनिहिता या दिक् सोदिची । मेरोर्व्यवहिता या दिक् साऽवाची ।

आत्मानं निरूपयति—(१)ज्ञानाधिकरणमिति । अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ।

पदकृत्यम् ।

दिगित्यर्थः । हेतुर्दिगित्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात्तद्वारणाय प्राच्यादिव्यवहारहेतुरिति । आकाशादिवारणायासाधारणेति ।

**ज्ञानाधिकरणेति** । भूतलादिवारणाय ज्ञानेति । कालादिवारणाय समवायेनेत्यपि देयम् । **ईश्वर इति** । समवायसम्बन्धेन नित्यज्ञानवानीश्वरः । **जीव इति** ।

विरला ।

त्वापरत्वबुद्धिपक्षकानुमानेनासमवायिकारणसंयोगाश्रयतया दिक्सिद्धिरित्युत्तरं द्रष्टव्यम् । प्राच्यादिव्यवहारस्योपाधिभेदप्रयोज्यत्वाद्दिगेकैवेत्याह सा चेति ।

**तत्रेश्वर इति** । अत्रायं सन्देहः—नन्वीश्वरसद्भावे किं प्रमाणम् ? न तावत्प्रत्यक्षं नीरूपस्पर्शद्रव्यत्वेन बाह्यप्रत्यक्षासम्भवात् , परात्मप्रत्यक्षवारणाय तत्तदात्ममनःसंयोगस्य मानसतत्तदात्मप्रत्यक्षे हेतुत्वस्य वाच्यतया तदभावान्नापीश्वरस्य मानसप्रत्यक्षम् , लिङ्गाभावान्नानुमानम् , ईश्वरोक्तत्वादेवागमस्य प्रामाण्यात्तदासिद्धौ कथमागमोऽपि तत्र प्रमाणमिति चेत् । **उत्तरम्**—न, क्षित्यादिकार्यं कर्तृजन्यं कार्यत्वाद्घटवदित्यनुमानेन कर्तृजन्यत्वे साधनीयेऽस्मदादिकृतेस्तत्रासम्भवात्तत्कर्तृत्वेनेश्वरसिद्धिरिति संक्षेपः । **प्रतिशरीरं भिन्न इति** । सुखदुःखादिवैचित्र्यात् इति हेतुः पूरणीयः । जीवस्याणुत्वे सुखाद्यनुपलब्धिः स्यात् , मध्यमपरिणामवत्त्वेऽनित्यत्वापत्त्या कृतहानाकृताभ्यागमप्रसङ्ग इत्याशयेनाह **विभुरिति** । अत्र शङ्का—जीव-

(१) ज्ञानस्याधिकरणं ज्ञानाधिकरणम् , निरूपितत्वं षष्ठ्यर्थः, अधिकरणत्वमाश्रयत्वम् , तथाच ज्ञाननिरूपिताश्रयत्वमात्मनो लक्षणमित्यर्थः ।

मनसः किं लक्षणं, कतिविधं च तत्?—

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥**

---

न्यायबोधिनी ।

**मनो निरूपयति**—सुखादीति । **उपलब्धिनाम साक्षात्कारः, तथा च सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणम् । इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः सुखादिसाक्षात्कारकारणत्वविशेषणम् । विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनः सुखादिकं प्रति समवायिकारणत्वात्, अत इन्द्रियत्वरूपविशेष्योपादानम् ।**

पदकृत्यम् ।

सुखादिसमवायिकारणं जीव इत्यर्थः ।

**सुखेति** । आत्ममनःसंयोगादिवारणायेन्द्रियमिति । चक्षुरादिवारणाय सुखेति ।

विरला ।

सत्त्वे किं मानमिति । **उत्तरम्**-अहं सुखीत्यादिप्रत्यक्षमेव मानमिति । **पुनः शङ्का**-ननु तथापि परात्मनि किं प्रमाणमुक्तप्रमाणं तु स्वात्मसाधकमेवेति । **उत्तरम्**—परशरीरं चेतनाधिष्ठितं चेष्टावत्त्वाद्रथवदित्यनुमानमेव प्रमाणं विद्धि ।

**सुखेत्यादि** । अत्र **पूर्वपक्षः**-ननु मनसि किं प्रमाणमिति । **उत्तरम्**—सुखादिसाक्षात्कारः करणजन्यः जन्यसाक्षात्कारत्वात् चाक्षुषवदित्यनुमानेन चक्षुरादिबाधात् मनः सिध्यति । मनसोऽनन्तत्वे हेतुमाह **प्रत्यात्मेति** । एकैकस्यात्मन एकैकं मन आवश्यकमिति आत्मनामनन्तत्वात् मनसामप्यनन्तत्वमित्यर्थः । **परमाणुरूपमिति** । मीमांसकास्तु मनो विभु वदन्ति, किन्तु विभुद्वयसंयोगानङ्गीकारेण तस्य विभुत्वे ज्ञानोत्पत्तिर्न स्यात् असमवायिकारणस्याभावात् , विभुद्वयसंयोगाऽङ्गीकारे तस्य नित्यत्वेन सुषुप्त्यभावः स्यात् , अणुत्वे तु यदा मनः पुरीतती वर्तते तदा सुषुप्तिर्यदा निःसृतं तदा ज्ञानोत्पत्तिरिति । **एतेन कथं मनोऽणु इति प्रश्नस्योत्तरमूह्यम् ।**

## [३] गुणलक्षणप्रकरणम् ।

रूपस्य किं लक्षणं कतिविधं च तत ?—

**चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ॥**

न्यायबोधिनी ।

रूपं लक्षयति—चक्षुरिति । चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम् । विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम् । तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः, 'यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्ये'ति नियमात्तद्वारणाय विशेष्योपादानम् । चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् । मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः, तत्रापि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात्, अतस्तद्वारणाय मात्रपदं, संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति । अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति । अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वम् । अग्राह्यत्वं नाम तदविषयत्वम् । तथाच चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्य·

पदकृत्यम् ।

**चक्षुरिति** । रूपत्वादिवारणाय गुणपदम् । रसादिवारणाय चक्षुर्ग्राह्य इति । संख्यादिवारणाय मात्रपदम् । यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणस्य विवक्षणीयतया तत एव संख्यादिवारणं सम्भवतीति मात्रपदं व्यर्थम् । तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम् । वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मा·

विरला ।

द्रव्यानन्तरं क्रमप्राप्तगुणनिरूपणावसरे प्रथमोद्दिष्टं रूपमाह **चक्षुरिति** । चक्षुर्मात्रेण ग्राह्यः चक्षुर्मात्रग्राह्यः, जन्यत्वं तृतीयार्थः, ग्रहधातोर्ज्ञानमर्थः, ण्यत्प्रत्ययस्य विषयोऽर्थः, तथाच चक्षुर्मात्रजन्यज्ञानविषयत्वे सति गुणत्वं रूपस्य निष्कृष्टलक्षणं बोध्यम्, चक्षुर्मात्रजन्यं यज् ज्ञानमिदं रूपमित्याकारकं तद्विषयत्वस्य रूपे सत्त्वाल्लक्षणसमन्वयः । **अत्रेयमाशङ्का**—ननु चित्ररूपं किमित्यतिरिक्तमङ्गीक्रियते, अव्याप्यवृत्तिनीलादिस·

न्यायबोधिनी ।

प्रत्यक्षविषयत्वमिति फलितोऽर्थः । ननु प्रभाघटसंयोगे रूपलक्षण- स्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न । गुणपदस्य विशेषगुणपरत्वात् । न चैवं विशेषगुणत्वघटितलक्षणे संख्यादावति, व्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम् । जलमात्रवृत्तिसांसि- द्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात् । (१)अथवा चक्षु- र्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् , घटपटसंयोगस्य त्वगिन्द्रि- यग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् । (यो गुणो यदिन्द्रिय- ग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् ।) अत्र जातिघटितल- क्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादा(२)वतिव्या- प्तिरतस्तद्वारणाय तदुपादानम् । एवं रसादिलक्षणे विशेषणानुपा- दाने लक्ष्यभिन्नगुणादावतिव्याप्तिः, विशेष्यानुपादाने लक्ष्यमात्रवृ- त्तिरसत्वगन्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्ययोरुपादानम् ।

पदकृत्यम् ।

त्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया विशेषपदं न देयम् । त्र्यणुकादिवारणाय गुणपदं तु देयम् । सप्तेति । रूपमित्यनुषज्यते ।

विरला ।

मुदाय एव तदस्तु–इति । उत्तरम्—रूपस्य व्याप्यवृत्तित्वनियमात् अवयवानां रूप- वत्त्वेऽपि अवयविनो नीरूपत्वेन पटाद्यप्रत्यक्षत्वापत्तेश्चित्ररूपसिद्धिरिति। अभास्वरशु- क्लमिति । जले इति वृत्तित्वं सप्तम्यर्थः, तथाचाभास्वरशुक्लरूपं जलवृत्तीत्यन्व- यबोधः । अत्र शङ्का—ननु यमुनाजलं कथं नीलमुपलभ्यते–इति । उत्तरम्— तस्याश्रयोपाधिकत्वात् । इति ॥

(१) विशेषपदाघटिततया लघुभूतलक्षणान्तरमाहाथवेति । तथाच चक्षुर्मात्रग्राह्यत्वस्य चक्षुर्मात्रगृहीतस्नेहविशेषेऽतिव्याप्त्यापत्त्या चक्षुर्मात्रग्राह्यत्वस्य जातिविशेषणत्वमादाय चक्षुर्मात्र- ग्राह्यजातिमद्गुणत्वस्यावश्यकतया न प्रभाघटसंयोगेऽतिव्याप्तिरित्यर्थः ।

(२) प्रभाऽन्नादिपदार्थः ।

रसस्य किं लक्षणं कतिविधश्च सः ?—

**रसनाग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ॥**

गन्धस्य किं लक्षणं तद्भेदश्च कः ?—

**घ्राणग्राह्यो गुणो गन्धः । स द्विविधः--सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ॥**

---

पदकृत्यम् ।

**रसनेति** । रसत्वादिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय रसनेति । **तत्रेति** । पृथिवीजलयोरित्यर्थः । **षड्विध इति** । अत्र रस इत्यनुवर्तते ।

**घ्राणग्राह्य इति** । गन्धत्वादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय घ्राणग्राह्य इति । **पृथिवीति** । पृथिवीसम्बन्धसत्त्वे गन्धप्रतीतिसत्त्वं पृथिवीसम्बन्धाभावे गन्धप्रतीत्यभाव इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव जले प्रतीतिर्बोध्या । एवं वायावपि । ननु देशान्तरस्थकस्तूरीकुसुमसम्बद्धपवनस्यैतद्देशे सत्त्वात्कुसुमादिसम्बन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः । न च वाय्वानीतत्र्यणुकादिसम्बन्धोऽस्त्येवेति वाच्यम् । कस्तूर्या न्यूनतापत्तेः, कुसुमस्य च सच्छिद्रत्वापत्तेरिति चेन्न । भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तरोत्पत्तेः, कर्पूरादौ तु तदभावान्न तथात्वमिति ॥

विरला ।

**रसनेति** । रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणम् । अनेन 'रसाः कति कुत्र ते कतिविधाः' इति प्रश्नस्योत्तरं जातम् । **षड्विध इति** । **अत्र प्रश्नः**—ननु रूपवद्रसः कथं न चित्रोऽतिरिक्तोऽङ्गीक्रियते—इति । **उत्तरम्**—चित्ररसो नाङ्गीकर्तुमुचितः अवयविनो नीरसत्वेऽपि क्षत्यभावाद्द्रव्यग्रहणे रसनेन्द्रियस्यासामर्थ्यात् इति । **मधुर एवेति** । **अत्रेयमाशङ्का**—ननु जम्बीररसादौ सम्लोपलब्धेः कथं मधुर एवेति चेत् । **उत्तरं**—न, तस्य जम्बीरोपाधिकत्वात्, आमलक्यादिभक्षणस्य माधुर्यव्यञ्जकत्वाच्चेति ।

**घ्राणेति** । घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धस्य लक्षणं बोध्यम् ॥

स्पर्शस्य किं लक्षणं के च भेदाः ?—

त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः–शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ॥

रूपादिचतुष्टयं कुत्र पाकजमपाकजं वा कुत्र ?—

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्रापाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥

---

न्यायबोधिनी ।

स्पर्शं लक्षयति–त्वगिन्द्रियमात्रग्राह्य इति । अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय । अन्यविशेषणकृत्यं पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः ।

रूपादिचतुष्टयमिति । एतत्तत्त्वनिर्णयश्चेत्थम्–पाको नाम विजातीयतेजःसंयोगः । स च नानाजातीयरूपजनको विजातीयस्तेजःसंयोगः । तदपेक्षया रसजनको विजातीयस्तेजःसंयोगः । एवं गन्धजनकोऽपि ततो विजातीय एव । एवं स्पर्शजनकोऽपि तथैव । एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः । यथा तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशे

पदकृत्यम् ।

स्पर्शत्वादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय त्वगिन्द्रियेति । सङ्ख्यादिवारणाय मात्रपदम् । तत्रेति । पृथिव्यादिचतुष्टये । शीत इति शीतस्पर्शः । उष्ण इति उष्णस्पर्शः ॥

विरला ।

त्वगिति । त्वगितरेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य निष्कृष्टलक्षणं बोध्यम् ॥ अनेन स्पर्शस्य किं लक्षणमिति प्रश्नस्योत्तरं भवति । स चेति । एतेन स्पर्शः कतिविधः स च कीदृश इत्यस्योत्तरं जातम् ॥

प्रसङ्गाद्रूपादिचतुष्टयस्य पाकजत्वापाकजत्वे प्रतिपादयन्नित्यत्वानित्यत्वे प्रतिपादयति रूपादीति । पाकजमिति हेतुगर्भविशेषणमिदम् , तथाच पृथिव्यां वर्तमानं

न्यायबोधिनी ।

रूपान्तरस्य पीतादेरुत्पत्तिर्न तु रसादेरुत्पत्तिः, पूर्वरसस्याम्लस्यैवा-नुभवात् । क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात् । तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः । एवं गन्धजनको विलक्षण एव, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः । एवं स्पर्शजनकोऽपि, पाकवशात्कठिनस्पर्शनाशे मृदुस्पर्शानुभवात् । तस्माद्रूपादिजनका विजातीया एव पाकाः यथाकार्यमुन्नेयाः । अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः । यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते, तदुत्तरं

विरला ।

रूपादिचतुष्टयं यतः पाकजमतो नित्यपृथिव्यामनित्यपृथिव्यां च वर्तमानं सर्वमप्यनित्यमित्यर्थः । एवमपाकजमित्यपि नित्यत्वानित्यत्वयोः हेतुगर्भं विशेषणं बोध्यम् । नन्वत्रान्यत्र जलादौ वर्तमानं रूपादिचतुष्टयमित्यसङ्गतम्, गन्धस्य जलाद्यवृत्तित्वेन तद्घटितचतुष्टयस्य जलाद्यवृत्तित्वादिति चेन्न । रूपादिचतुष्टयमित्यस्य रूपादिचतुष्टय-मध्यप्रविष्टमित्यर्थात् । रूपादिचतुष्टयमध्यप्रविष्टानामेषां जलादिवृत्तित्वं तु सम्भवत्येव, तान्येव रूपादिचतुष्टयघटकपदेन ग्राह्याणीति न काप्यनुपपत्तिः । अत्र पूर्वपक्षः—कथं पाकाद्रूपादिजन्मेति । **समाधानम्**—आमनिक्षिप्तघटादौ वह्निसंयोगात्परमाण्वादिकपालान्तावयवेषु क्रिया ततः परस्परविभागः ततोऽन्योन्यसंयोगनाशः ततोऽसमवायिनाशात् द्रव्यनाश इति नियमेन श्यामघटनाशेऽवशिष्टपरमाणवः पच्यन्ते पुनस्तत्र पाकेन रूपाद्युत्पत्त्यनन्तरमीश्वरेच्छया द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिरिति, अन्यथा घटस्य दृढत्वादग्निप्रवेशासंभवाद्रूपाद्युत्पत्तिर्न स्यादिति पीलु( परमाणु )पाकवादिनां **वैशेषिकाणाम्** । **नैयायिकास्तु** घटादिकं सच्छिद्रमेवान्यथा तदन्तर्गततण्डुलादीनां पाको न स्यात् अत एकदैव परमाणुप्रभृतिघटान्तेषु घटनाशं विना पाकेन रूपाद्युत्पत्तिरिति **समाधानं** कुर्वन्तीति संक्षेपः ॥ पाकजत्वादेवानित्य-

सङ्ख्यायाः किं लक्षणम्, कुत्र च सा वर्त्तते ?—

**एकत्वादिव्यवहारहेतुः संख्या । सा नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥**

न्यायबोधिनी ।

तैरेव तादृशरूपरसादय उत्पद्यन्ते । तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः । एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते । (एवं) पाकमाहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक् ॥

पदकृत्यम् ।

**एकत्वादीति** । एकत्वमित्यादिर्यो व्यवहारः एको द्वावित्याद्यात्मकस्तस्य हेतुः सङ्ख्या इत्यर्थः । घटादिवारणाय एकत्वादीति । कालादिवारणायासाधारणेऽपि देयम् । ननु सङ्ख्याया अवधिरस्ति न वेत्यत आह-**एकत्वादीति** । तथाच—

एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः ।
अन्त्यं मध्यं परार्धं च दशवृध्या यथाक्रमम् ॥

इति महदुक्तेः परार्धपर्यन्तैव सङ्ख्या इति भावः ॥

विरला ।

मित्याह **अनित्यं चेति** । अन्यत्र—जलादौ । अपाकजमिति हेतुभूतं विशेषणमिदम्, यतो न पाकजमतो नित्यमनित्यञ्चेति भावः ॥

**एकत्वादीति** । गणनाव्यवहारहेतुः संख्येत्यर्थः । नित्यानित्यादिभेदेनैकत्वं द्विविधमित्याह **एकत्वमिति** । **नित्यगतं नित्यमिति** । एकत्वनाशं प्रत्याश्रयनाशो हेतुरतः परमाणूनां नाशाभावात्तद्गतैकत्वस्यापि नाशाभावात् इत्यर्थः । **अनित्यगतमनित्यमिति** । द्व्यणुकादीनां नाशात्तद्गतैकत्वस्यापि नाशादिति भावः । **द्वित्वादिकं** त्विति । अत्र समवायिकारणगतैकत्वमसमवायिकारणम् । अयमेकोऽयमेक इत्याद्यपेक्षाबुद्धिर्निमित्तकारणम् । अपेक्षाबुद्धिनाशश्च व्यासज्यवृत्तिद्वित्वादिनाशक इति बोध्यम् । **सर्वत्रेति** । नित्यानित्यद्रव्ययोरित्यर्थः । तथा चापेक्षाबुद्धिजन्यत्वात् द्वि-

परिमाणस्य किं लक्षणं के च तस्य भेदाः ?—

**मानव्यवहारासाधारणंकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्—अणु महद्दीर्घं ह्रस्वं चेति ॥**

पृथक्त्वस्य किं लक्षणम् ?—

**पृथग्व्यवहारासाधाणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

---

पदकृत्यम् ।

**मानेति** । मानं परिमितिस्तस्या यो व्यवहारः–इदं महदिदमणु–इत्याद्यात्मकः तस्य कारणं परिमाणमित्यर्थः । दण्डादिवारणाय मानेति । कालादिवारणायासाधारणेति । शब्दत्ववारणाय कारणमिति । **नवद्रव्येति** । चतुर्विधमपि परमध्यभेदेन द्विविधम् । तत्र परमाणुह्रस्वत्वे परमाणुमनसोः । मध्यमाणुह्रस्वत्वे द्व्यणुके । परममहत्त्वदीर्घत्वे गगनादौ । मध्यममहत्त्वदीर्घत्वे घटादौ । एतन्मौक्तिकमाण्विति व्यवहारस्यापकृष्टमहत्त्वाश्रयत्वाद्गौणत्वं बोध्यम् । एवमेव केतनाद्यजनं ह्रस्वमित्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम् ॥

**पृथगिति** । अयमस्मात्पृथगिति यो व्यवहारस्तस्य कारणं पृथक्त्वमित्यर्थः । दण्डादिवारणाय पृथगित्यादि । कालादिवारणायासाधारणेति । पृथग्व्यवहारत्ववारणाय कारणमिति ॥

विरला ।

त्वादिकमनित्यमेवेति भावः ॥

**मानेति** । चतुर्विधमपीदं परिमाणं नित्यानित्यभेदेन द्विविधमिति बोध्यम् । नित्यगतं नित्यमनित्यगतमानित्यम् । तत्रानित्यं संख्याजन्यं[१] परिमाजन्यं[२] प्रचयजन्यं[३] चेति त्रिविधम् । तत्राद्यं परमाणुद्वित्वजन्यं द्व्यणुके, द्वितीयं कपालपरिमाणजन्यं घटे, तृतीयं तूलावयवजन्यं तूले इति, आश्रयनाशश्चास्य नाशक इति च द्रष्टव्यम् ॥

**पृथगिति** । इदमेकपृथक्त्वादिभेदेनानेकविधम् । तत्रैकपृथक्त्वं नित्यगतं नित्यमनित्यगतमनित्यम् । द्विपृथक्त्वादिकं सर्वत्रानित्यमेव । इदं चाश्रयद्वितीयक्षणे उत्पद्यते आश्रयनाशान्नश्यति च । अयमत्र **पूर्वपक्षः**––भेदातिरिक्तपृथक्त्वे किं मानमिति । **समाधानम्**—घटः पटो नेति प्रतीतेर्विलक्षणाया घटः पटात् पृथगिति प्रतीतेरेव तत्र मानत्वादित्यवेहि ।

संयोगस्य किं लक्षणम् ?—

**संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥**

विभागस्य किं लक्षणम् ?—

**संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ॥**

---

न्यायबोधिनी ।

**विभागं लक्षयति**–संयोगेति । **संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् । विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिस्तद्वारणाय गुणत्वमिति विशेष्योपादानम् ॥**

पदकृत्यम् ।

**संयुक्तेति** । इमौ संयुक्ताविति यो व्यवहारस्तस्य हेतुः संयोग इत्यर्थः । दण्डादिवारणाय संयुक्तव्यवहारेति । कालादिवारणायासाधारणेत्यपि देयम् । संयुक्तव्यवहारत्वेऽतिप्रसक्तिवारणाय हेतुरिति । उपदर्शितलक्षणचतुष्टयेऽसाधारणपदं देयम् । क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे ईश्वरेच्छादिवारणायासाधारणेति दृश्यते तत्त्वाधुनिकैर्न्यस्तमिति बोध्यम् ॥

**संयोगेति** । संयोगनाशजनक इत्यर्थः । कालेऽतिप्रसक्तिवारणाय गुणपदम् । ईश्वरेच्छादिवारणायासाधारणेत्यपि बोध्यम् । ननु असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यादिति चेत् । न, क्रियायामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ॥

विरला ।

**संयुक्तेति** । अत्र जनकत्वं जनकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावत्वं बोध्यम् । संयोगः सर्वोऽप्यव्याप्यवृत्तिरनित्यश्च, अजसंयोगानङ्गीकारात् । स च संयोगस्त्रिविधः—अन्यतरकर्मजः[१] उभयकर्मजः[२] संयोगज[३]श्चेति । तत्राद्यः—शकुनिशैलसंयोगः, द्वितीयः—मेषयोः संयोगः, तृतीयः—कपालतन्तुसंयोगात्तन्तुकुंभसंयोग इति । कर्मजोपि द्विविधः—अभिघातो नोदनं चेति ॥ तत्रादिमो शब्दहेतुः, द्वितीयः शब्दाहेतुरिति बोध्यम् ॥

**संयोगनाशकेति** । नाशजनकत्वं च प्रतियोगित्वसम्बन्धानवच्छिन्नकार्यतानिरूपितं ग्राह्यम् , तेन संयोगे नातिव्याप्तिः । **अत्र पूर्वपक्षः**—विभागस्य संयोगनाशकत्वं कथम्–इति । **उत्तरम्**–प्रथममिषौ क्रिया ततो धनुषा विभागः ततः पूर्वसंयोगनाशः, तत उत्तरसंयोगोत्पत्तिः ततः कर्मनाश इति । विभागोऽप्यव्याप्यवृत्तिरनि-

परत्वापरत्वयोः किं लक्षणं, के च भेदाः ?—

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते च द्विविधे–दिक्कृते कालकृते चेति । दूरस्थे दिक्कृतं परत्वम्, समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वं, कनिष्ठे कालकृतमपरत्वम् ॥**

---

पदकृत्यम् ।

**परेति** । परव्यवहारासाधारणं कारणं परत्वम् । अपरव्यवहारासाधारणं कारणमपरत्वमित्यर्थः । दण्डादिवारणाय परव्यवहारेति । कालादिवारणायासाधारणेति । परव्यवहारत्ववारणाय कारणेति । एवमेव द्वितीयेऽपि बोध्यम् ॥

विरला—

त्यश्च । विभक्तव्यवहारासाधारणकारणत्वं विभागस्य लक्षणम् । अयमपि संयोगवत् प्रथमं त्रिविधः । उदाहरणमपि तदेव । विभागजोपि—हेतुमात्रविभागजो हेत्वहेतुविभागजश्चेति द्विविधः । तत्राद्यः कपालद्वयविभागात्कपालपूर्वदेशाविभागः । द्वितयिस्तु हस्ततरुविभागात्कायतरुविभाग इति ॥

**परापरेति** । परः पर इति अनुगतमतिसिद्धपरत्वत्वजातिमत्परत्वम्, तथाऽपर इति प्रत्यक्षसिद्धापरत्वत्वजातिमदपरत्वं च द्विप्रकारमित्यर्थः । द्वैविध्यमाह **दिक्कृते** इत्यादिना । अत्र दैशिकपरत्वे बहुतरमूर्यसंयोगान्तारितत्वरूपाविप्रकृष्टज्ञानं निमित्तम्, यथा प्रयागस्थस्य प्रयागान्मथुरामपेक्ष्य कुरुक्षेत्रदेशो विप्रकृष्ट इति ज्ञानात्कुरुक्षेत्रे परत्वम् । एवं दैशिकापरत्वेऽल्पतरसूर्यसंयोगान्तरितत्वरूपसंनिकृष्टत्वज्ञानं निमित्तम्, यथा प्रयागात्कुरुक्षेत्रमपेक्ष्य मथुरा संनिकृष्टेति ज्ञानात् मथुरायामपरत्वम् ॥ अनयोर्दिक्पिण्डसंयोगोऽसमवायी बोध्यः । एवमेव कालिकपरत्वे बहुतरतपनपरिस्पन्दान्तरितजन्मवत्त्वरूपज्येष्ठत्वज्ञानं निमित्तम्, यथा लक्ष्मणाद्रामः प्रचुरतरकालेन सम्बद्ध इति ज्येष्ठत्वज्ञानाद्रामे परत्वम् । तथाऽल्पतरतपनपरिस्पन्दान्तारितजन्मवत्त्वरूपकनिष्ठत्वज्ञानं कालिकापरत्वे निमित्तम्, यथा रामाल्लक्ष्मणोऽल्पतरकालेन सम्बद्ध इति कनिष्ठत्वज्ञानाल्लक्ष्मणेऽपरत्वमिति । एतयोश्च कालपिण्डसंयागोऽसमवायीति बोध्यम् । **अत्रायं विशेषः**—दैशिके परत्वापरत्वे मूर्त एव वर्तेते । कालिके तु जन्य एव न नित्ये इति सङ्क्षेपः ॥

गुरुत्वस्य किं लक्षणम् ?—

**आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ॥**

द्रवत्वस्य किं लक्षणं के च भेदाः ?—

**आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम्—सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वं, तेजसि सुवर्णादौ ॥**

स्नेहस्य किं लक्षणम्, कुत्र च सः ?—

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥**

---

न्यायबोधिनी ।

गुरुत्वं लक्षयति—आद्येति । द्वितीयपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाद्येति । उत्तरत्र स्यन्दने आद्यत्वविशेषणमपि पूर्ववदेव योजनीयम् ॥

स्नेहं लक्षयति— चूर्णादीति । पिण्डीभावहेतुत्वे सति गुणत्वं स्नेहत्वम् ।

पदकृत्यम् ।

आद्येति । दण्डादिवारणायासमवायीति । रूपादिवारणाय पतनेति । वेगेऽतिव्याप्तिवारणायाद्येति ॥

आद्यस्यन्दनेति । दण्डादिवारणायासमवायीति । रसादिवारणाय स्यन्दनेति ॥

चूर्णादीति । चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिस्तस्य पिण्डीभावः

विरला ।

आद्येति । स्यन्दनं—स्रवणम् । सांसिद्धिकम्—अवयवद्रवत्वजन्यम् । नैमित्तिकम्—अग्निसंयोगाद्यसमवायिकारणकम् । इदं च जलपरमाणुभिन्नेऽनित्यमित्यवधेयम् । ननु नैमित्तिकद्रवत्वस्य घटादिपृथिव्यां वह्न्यादितेजसि चाभावात् कथं पृथिवीतेजसोरित्यत आह पृथिव्यामिति । अनेन द्रवत्वं निरूप्य तत्कतिविधं कुत्र च कीदृशमित्यस्योत्तरं जातम् ॥

चूर्णादीति । स्नेहोऽपि नित्यगतो नित्योऽनित्यगतोऽनित्यश्चेति द्रष्टव्यम् । अत्र शङ्का—ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः तस्य दहन-

शब्दस्य किं लक्षणम्, कतिधा च सः ?—

**श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधः— ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥**

---

न्यायबोधिनी ।

स्य लक्षणम् । पिण्डीभावो नाम चूर्णादेर्धारणाकर्षणहेतभूतो विलक्षणः संयोगः । तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य, तथासति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः, अतः स्नेह एवासाधारणं कारणम् । विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम् । वस्तुतस्तु द्रुतजलसंयोगस्यैव चूर्णादिपिण्डीभावहेतुत्वं स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥

शब्दं लक्षयति—श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय श्रोत्रेति । स त्रिविधः—संयोगजो विभागजः शब्दजश्चेति । यथा भेरीदण्डसंयोगजो भा(झा)ङ्कारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः । वंशे पाट्यमाने दलद्वयविभाग-

पदकृत्यम् ।

संयोगविशेषस्तस्य हेतुर्निमित्तकारणं स्नेह इत्यर्थः । कालादावतिव्याप्तिवारणाय पिण्डीभावेति । चूर्णपदं स्पष्टार्थम् ॥

**श्रोत्रेति** । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादिवारणाय श्रोत्रग्राह्य

विरला ।

नाशकत्वात् दहननाशप्रसङ्गात्, तथा च कथं जलमात्रवृत्तिरिति । **उत्तरम्**—तैले प्रतीयमानोऽपि स्नेहो जलीय इव स च प्रकृष्टत्वादग्नेरनुकूल इति, अपकृष्टस्नेहमेव जलं वह्निनाशकमिति भावः ॥

**श्रोत्रेति** । श्रोत्रेण ग्राह्यः श्रोत्रग्राह्यः, तृतीयार्थो जन्यत्वम्, ग्रहधातोर्ज्ञानमर्थः ण्यत्प्रत्ययस्य विषयत्वमर्थः, तथा च श्रोत्रेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। श्रोत्रेन्द्रियजन्यं यत् ज्ञानम् 'अयं शब्दः' इत्याकारकं तद्विषयत्वस्य शब्दे

बुद्धेः किं लक्षणं कतिधा च सा ?—

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा–स्मृतिरनुभवश्च ॥**

न्यायबोधिनी ।

जश्चटचटाशब्दः । (१)शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दस्धारा जायन्ते, तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम् ।

बुद्धेर्लक्षणमाह—सर्वव्यवहारेति । व्यवहारः-शब्दप्रयोगः । ज्ञानं

पदकृत्यम् ।

इति । वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद्गुणपदमनुपादेयमेव ॥

बुद्धिलक्षणमाह-सर्वेति । सर्वे ये व्यवहारा आहारविहारादयस्तेषां हेतुर्बुद्धि-

विरला ।

सत्त्वाल्लक्षणसमन्वयः । ध्वन्यात्मको भेर्यादाविति । अत्र प्रश्नः—भेर्यादावुत्पन्नः शब्दः कथं श्रोत्रेण गृह्यते इति । उत्तरम्—वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा ( शब्दसन्तानेन तत्र ) तदुत्पत्तेरिति । अत्र केचिच्छब्दं पृथिव्यामेवाङ्गीकुर्वन्ति तन्मतनिरासायाह आकाशमात्रेति । भेर्यादौ इत्यत्र वीणामृदङ्गादिरादिना ग्राह्यः । द्विविधोऽप्ययं शब्दस्त्रिविधः-संयोगजो[२]विभागजः[२]शब्दजश्चे[३]ति । प्रथमः भेरीदण्डसंयोगजः ध्वन्यात्मकः, वायुकण्ठसंयोगजः वर्णात्मकश्च । वंशे पाट्यमाने दलद्वयविभागजो ध्वन्यात्मकश्चटचटेत्यादिशब्दो ओष्ठद्वयविभागजो वर्णात्मकश्च द्वितीयः । तृतीयस्तु द्वितीयादिश्चरमान्तः शब्दः । शब्दमात्रे आकाशं समवायि, भेर्याकाशादिसंयोगा असमवायिनः अन्यत्सर्वं निमित्तमिति बोध्यम् । अत्र शङ्का—ननु सोऽयं ककार इति प्रत्यभिज्ञाबलाच्छब्दस्य नित्यत्वमिति कथं नैयायिकैः शब्दस्यानित्यत्वमुच्यते इति चेत् । उत्तरम्—न, तदेवौषधमितिवत्तस्याः साजात्यावलम्बनत्वात् , अत एवोत्पन्नः ककारः विनष्टः ककार इति प्रतीतिरिति अलं पल्लवितेन ॥

---

( १ ) शब्दजस्योदाहरणमाह शब्देति । वीचीति । एकस्या वीचेस्तरङ्गायथाऽन्यस्तरङ्गस्ततश्चान्यस्तथैकस्माच्छब्दाच्छब्दान्तरं ततश्चान्यत् , एकस्मिन्कदम्बफले यथा दशदिक्षु मुकुला जायन्ते ततो पुनर्दशसु दिक्षु स्थूलमुकुलास्तथैकस्माच्छब्दाद्दशसु दिक्षु सूक्ष्मा दश शब्दास्ततः पुनर्दशदिक्षु स्थूलशब्दा इति न्यायद्वयस्वरूपं बोध्यम् ।

स्मृतेः किं लक्षणम् ?—

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः ॥**

अनुभवस्य किं लक्षणम्, के च भेदाः ?—

**तद्भिन्नं ज्ञानमनुभवः । स द्विविधः—यथार्थोऽयथार्थश्च ॥**

---

न्यायबोधिनी ।

विना शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूप(१)व्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते—सा द्विविधेति ।

स्मृतिं लक्षयति-संस्कारेति । बहिरिन्द्रियाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् । संस्कारजन्यत्वविशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिस्तद्वारणाय विशेषणोपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम्, ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् । प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम्(२) ॥

अनुभवं लक्षयति—तद्भिन्नमिति । तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम् ।

पदकृत्यम्—

रित्यर्थः । दण्डादिवारणाय सर्वव्यवहारेति । कालादिवारणायासाधारणेत्यपि देयम् ॥

संस्कारेति । संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति । अनुभवेऽतिव्याप्तिवारणाय संस्कारजन्यमिति । तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम् । क्वचित्तथैव पाठः । न चैवंसत्यसम्भवः, तस्य संस्कारजन्यत्वे सतीन्द्रियार्थसंनिकर्षाजन्यार्थकत्वात् ॥

तदिति । स्मृतित्वावच्छिन्नभिन्नमित्यर्थः । तेन यत्किञ्चित्स्मृतिभिन्नत्वस्य स्मृ·

विरला ।

सांख्यमते बुद्धिशब्दस्य महत्तत्त्ववाचकत्वादन्तःकरणरूपत्वाच्चाह ज्ञानमिति । तथा च मनोभिन्नान्तःकरणे मानाभावात् बुद्धिर्ज्ञानपर्याय एवेति भावः ॥

संस्कारेति । स्मृतिर्हि भावनाख्यसंस्कारेण जायते ज्ञानं चेति लक्षणसङ्गतिः । पदव्यावृत्तिः पदकृत्ये द्रष्टव्या ॥

अनुभवामीत्यनुभवसिद्धमनुभवत्वं प्रत्यक्षजातिरेव, न त्वनुमित्यादिसाधारणं

---

(१) व्यवहारहेतुत्वमिति । 'अर्थं बुध्वा शब्दरचने'ति न्यायेन सकलशब्दप्रयोगकारणत्वरूपलक्षणस्य सत्त्वाल्लक्षणसङ्गतिरित्यर्थः । (२) बहिरिन्द्रियाजन्यत्वविशिष्टार्थकमित्यर्थः ।

यथार्थानुभवस्य किं लक्षणम् ?—

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः। (यथा रजते इदं रजतमिति ज्ञानम्) सैव प्रमेत्युच्यते।**

---

न्यायबोधिनी—

तथाच स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम्। तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः; विशेष्यानुपादाने घटादावतिव्याप्तिरतस्तद्वारणाय विशेषणविशेष्ययोरुभयोरुपादानम्। अनुभवं विभजते—स द्विविध इति ॥

यथार्थानुभवं लक्षयति—तद्वतीति। तद्वतीत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः, तथाच तद्वद्विशेष्यकत्वे सति (१)तत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम्। उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानम्। अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः। तद्वन्निष्ठविशेष्य-

पदकृत्यम्।

तौ सत्त्वेऽपि न क्षतिः। घटादावतिव्याप्तिवारणाय ज्ञानमिति। स्मृतिवारणाय तद्भिन्नमिति ॥

**तद्वतीति**। तद्वति तत्प्रकारो यस्य स तथेत्यर्थः। तद्वद्विशेष्यकतत्प्रकारक इति यावत्। स्मृतिवारणायानुभव इति। अयथार्थानुभववारणाय तद्वतीति। निर्विकल्पकेऽतिव्याप्तिवारणाय तत्प्रकारक इति ॥

विरला।

तत्, तत्र तादृशप्रत्ययाभावादतोऽनुभवत्वं प्रतिपादयति **तद्भिन्नमिति**।

**तद्वतीति**। **अत्र प्रश्नः**—ननु रजते रजतत्वमिति प्रमायामव्याप्तिः विशेष्यीभूतरजतत्वे रजतस्यासत्त्वादिति चेत्। **उत्तरं**—न, तद्वति तत्प्रकारकत्वमित्यस्य तत्सम्बन्धवति तत्प्रकारकत्वमित्यर्थात्, तथा च रजतत्वे रजताभावेऽपि रजतीयाधेयतात्मकसम्बन्धस्य रजतत्वे सत्त्वेन रजतत्वे रजतप्रकारकत्वमस्त्येवेति नाव्याप्तिरिति ॥ ननु शास्त्रे प्रमाप्यनुश्रूयते सा किं यथार्थानुभवाद्भिन्नाऽभिन्ना वेत्याशंक्याह **सैवेति**। यथार्थानुभव एव शास्त्रे प्रमेत्युच्यत इत्यर्थः। ननु वृक्षः संयोगीति प्रमा-

---

(१) तत्प्रकारकत्वे सति अनुभवत्वमिति पाठान्तरम्।

अयथार्थानुभवस्य लक्षणं किम् ?-

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः । ( यथा शुक्ताविदं रजतमिति ज्ञानम् ) सैवाप्रमेत्युच्यते ।।**

न्यायबोधिनी—

तानिरूपिततन्निष्ठप्रकारता(१)शालित्वमिति तु निष्कर्षः । अन्यथा यथाश्रुते रङ्गरजतयो'रिमे रजतरङ्गे' इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु दर्शितभ्रमे नातिव्याप्तिः, तज्ज्ञानस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारतायाः रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रङ्गत्वानिष्ठप्रकारतायाः रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रजतत्वप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात्, ( एवं ) रङ्गत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावाच्च ॥

अयथार्थानुभवं लक्षयति—तदभाववतीति । अत्रापि पूर्ववत्तदभावपदकृत्यम् ।

तद्भावेति । तदभाववद्विशेष्यकतत्प्रकारकोऽनुभवोऽयथार्थानुभव इत्यर्थः ॥

विरला ।

यामतिव्याप्तिः मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे कपिसंयोगप्रकारकत्वात् इति चेन्न । यदवच्छेदेन यत्सम्बन्धाभावस्तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात् । संयोगाभावावच्छेदेन संयोगज्ञानस्याप्रमात्वात् संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वान्नातिव्याप्तिः ॥

---

( १ ) अत्र प्रकारता तद्वत्तावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, तेन संयोगेन कपाले घटज्ञानस्य समवायेन तद्वद्विशेष्यकत्वस्य तत्प्रकारकत्वस्य च सत्त्वेपि न याथार्थ्यापत्तिः । तथा च येन सम्बन्धेन तत्प्रकारकानुभवस्य याथार्थ्यं तेन सम्बन्धेन तद्वन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपितप्रकारताशालित्वे सति अनुभवत्वम् तादृशविशेष्यतानिरूपितविशेष्यत्वावच्छिन्नतादृशप्रकारताशाल्यनुभवत्वं वा यथार्थानुभवत्वमिति निष्कर्षो बोध्यः । अयथार्थानुभववारणाय सत्यन्तम् । अत एव तद्वतीत्यपि । अत एव च विशेष्ये तद्वत्त्वनिवेशः । स्मृत्यादिवारणायानुभवत्वनिवेशः ।

यथार्थानुभवभेदाः के ?-

**यथार्थानुभवश्चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ॥**

न्यायबोधिनी ।

वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रका(१)रताशालिज्ञानत्वं विवक्षणीयम् । अन्यथा यथाश्रुते रङ्गरजतयो'रिमे रङ्गरजते' इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः, एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु न तत्रातिव्याप्तिः, तादृशप्रमायाः रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावात् (एवं) रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावाच्च । उदाहरणम्—यथा शुक्तौ 'इदं (२) रजतम्' इति (ज्ञानम्) ॥

**यथार्थानुभवं विभजते**—यथार्थानुभव इति ॥

पदकृत्यम् ।

यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम् । स्मृतिवारणायानुभव इति । यथार्थानुभवेऽतिव्याप्तिनिरसनाय तदभाववतीति । निर्विकल्पकवारणाय तत्प्रकारक इति ॥

**यथार्थेति** । यथार्थानुभवः प्रत्यक्षमेवेति चार्वाकाः । अनुमितिरपीति काणादबौद्धाः । उपमितिरपीति नैयायिकैकदेशिनः शाब्दमपीति नैयायिकाः । अर्थापत्तिरपीति प्राभाकराः । आनुपलब्धिकोऽपीति भाट्टवेदान्तिनौ । साम्भविकैतिह्यकावपीति

विरला ।

चातुर्विध्ये हेतुमाह **प्रत्यक्षेति** । अत्र प्रत्यक्षादिशब्दाः प्रत्यक्षादिप्रमापरा बोध्या इति प्रमाविभागः ।

---

(१) अत्र यत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिता गृह्यते तत्सम्बन्धावच्छिन्ना प्रकारता ग्राह्या । प्रयोजनं पूर्ववद् बोध्यम् ।

(२) रजतत्वाभाववद्विशेष्यकत्वे सति रजतत्वप्रकारकं शुक्तौ इदं रजत इति ज्ञानमिति पाठान्तरम् ।

तत्करणं कतिविधम् ?-

**तत्करणमपि चतुर्विधं–प्रत्यक्षानुमानोपमानशब्दभेदात् ॥**

करणस्य किं लक्षणम् ?—

**असाधारणं कारणं करणम् ॥**

---

न्यायबोधिनी।

तत्करणमिति। फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः। प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम्। एकैकप्रमाणलक्षणं तु वक्ष्यते–प्रत्यक्षज्ञानेत्यादिना ॥

करणलक्षणमाह—असाधारणमिति। व्यापारवदसाधारणं कारणं करणमित्यर्थः। असाधारणत्वं च–कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। यथा दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम्। कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः तदवच्छिन्नकार्यता घटे तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डोऽसाधारणं कारणम्। भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम्। साधारणकारत्वं च—कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् ।

पदकृत्यम्।

पौराणिकाः। चैष्टिकोऽपीति तान्त्रिकाः। एतेषां मतेऽस्वरसं सम्भाव्य तस्य चातुर्विध्यं दर्शितम् ॥

तदिति। यथार्थानुभवात्मकप्रमायाः कारणमित्यर्थः ॥

असाधारणमिति। कालादिवारणायासाधारणमिति। व्यापारेऽतिव्याप्तिवारणाय व्यापारवदित्यपि देयम्। व्यापारश्च—द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्ज-

विरला।

प्रसंगात्प्रमाणं विभजते तत्करणमिति चातुर्विध्ये हेतुमाह प्रत्यक्षेति। अत्र तु प्रत्यक्षादिशब्दाः प्रत्यक्षादिप्रमाणपरा व्याख्येयाः। तथा च न्यायसूत्रम्—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ( अ० १ आ० १ सू० ३ ) इति। इति प्रमाणविभागः।

प्रमाणज्ञानस्य करणज्ञानाधीनतयाऽऽदौ करणमाह असाधारणमिति। विशेषस्तत्र न्यायबोधिन्यादौ द्रष्टव्यः ॥

कारणस्य किं लक्षणम् ?—

## कार्यनियतपूर्ववृत्ति कारणम् ॥

न्यायबोधिनी ।

यथा ईश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारण-कारणत्वम् ॥

**कारणं लक्षयति**—कार्यनियतेति । **कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वं कारणत्वम् । नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो नियतत्वे सतीति विशेषणम् । नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धपदमपि कारणलक्षणे निवेशनीयम् । एवं च न तत्रातिव्याप्तिः, दण्डरूपादीनामन्यथासिद्धत्वात् ॥**

पदकृत्यम् ।

न्यजनकः । ईश्वरेच्छादिवारणाय तज्जन्यत्वे सतीति । कुलालजन्यत्वे सति कुलालजन्यघटजनकत्वं कुलालपुत्रस्याप्यस्त्यतस्तत्रातिव्याप्तिवारणाय प्रथमं सत्यन्तम् । दण्डरूपादिवारणाय तज्जन्यजनक इति ॥

**कार्येति** । कार्यान्नियताऽवश्यंभाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिर्यस्य तत्तथेत्यर्थः । अनियतरासभादिवारणाय नियतेति । कार्यवारणाय पूर्वेति । दण्डत्वादिवारणायानन्यथासिद्धत्वविशेषणस्यावश्यकत्वेन तत एव रासभादिवारणसम्भवे नियतपदमनर्थकमेव । एवं चानन्यथासिद्धकार्यपूर्ववृत्ति कारणमिति फलितम् । अनन्यथासिद्धत्वमन्यथासिद्धिशून्यत्वम् । अन्यथासिद्धिश्चावश्यक्लृप्तनियतपूर्ववर्तिनैव कार्यसम्भवे तत्सहभूतत्व-

विरला ।

करणत्वस्य कारणत्वघटिततया तज्जिज्ञासावारणाय कारणत्वं विवेचयति **कार्येति** । कार्यं प्रति कार्योत्पत्तिं प्रति नियतं व्यापकं सत् यत्पूर्ववृत्ति तत्कारणमित्यर्थः । यथा घटं प्रति दण्डः कारणमिति । तत्र हि घटः कार्यं तदुत्पत्तिं प्रति दण्डो व्यापकः-यत्र यत्र घटोत्पत्तिस्तत्र तत्र दण्ड इति व्याप्तौ दण्डस्य व्यापकत्वात् कार्यपूर्ववर्ती दण्ड इति कार्योत्पत्तिव्यापकत्वे सति पूर्ववर्तित्वरूपलक्षणस्य दण्डे सत्त्वाल्लक्षणसमन्वयः। अत्र अनन्यथासिद्धकार्यनियतपूर्ववृत्ति इति क्वाचित्कः पाठः। स च **सिद्धान्तचन्द्रोदयकारस्याभिमतस्तथैव** तैर्व्याख्यातत्वात् इति द्रष्टव्यम् ॥ अत्रायं **प्रश्नः**—उक्तल-

कार्यस्य किं लक्षणम् ?—

**कार्यं प्रागभावप्रतियोगि ॥**

कारणं कतिविधम् ?—

**कारणं त्रिविधं—समवाय्यसमवायिनिमित्तभेदात् ॥**

समवायिकारणस्य किं लक्षणम् ?—

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः**

---

न्यायबोधिनी ।

**कार्यं लक्षयति**—कार्यमिति । प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् । कार्योत्पत्तेः पूर्वम् 'इह घटो भविष्यति' इति या प्रतीतिर्जायते तत्प्रतीतिविषयीभूतो योऽभावः स प्रागभावः तत्प्रतियोगि घटादिरूपं कार्यम् ॥

**कारणं विभजते**—कारणमिति । समवायिकारणमसमवायिकारणं निमित्तकारणं चेति ॥

**समवायिकारणं लक्षयति**—यत्समवेतमिति । यस्मिन्समवेतं सत्समवायेन सम्बद्धं सत् कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः । उदाहरणम्—यथा तन्तव इति । येषु तन्तुषु समवायेन सम्बद्धं सत्पटात्मकं

पदकृत्यम् ।

म् । यथाऽवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्यसम्भवे तत्सहभूतत्वं दण्डत्वादौ तदन्यथासिद्धत्वम् ॥

**प्रागभावेति** । कालादिवारणाय प्रागिति । असम्भववारणाय प्रतियोगीति ।

**यदिति** । यस्मिन्समवायसम्बन्धेन वर्तमानं कार्यमुत्पद्यते तदित्यर्थः । चक्रादिवारणाय समवेतमिति ॥

विरला ।

क्षणस्यारण्यस्थदण्डेऽभावात्कथं घटनिरूपितकारणता दण्डे इति । **उत्तरम्**—कार्यनियतपूर्ववर्तिजातीयताया विवक्षणेन तत्रापि स्वरूपयोग्यतारूपकारणत्वनिर्वाह इति ॥

ननु कार्यमेव किमिति जिज्ञासायामाह **कार्यमिति** ॥ उत्पत्तेः पूर्वं विद्यमानोऽभावः प्रागभावः तत्प्रतियोगि कार्यमित्यर्थः । जन्यस्यैव प्रागभावो विद्यते न नित्यस्यातः कार्यमेव प्रागभावप्रतियोगीत्यर्थः ।

पटस्य, पटश्च स्वगतरूपादेः ॥

असमवायिकारणस्य किं लक्षणम् ?-

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणम-**

न्यायबोधिनी ।

कार्यमुत्पद्यते तत्तन्तवः समवायिकारणमित्यर्थः । सामान्यलक्षणं तु-समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति । समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसम्बन्धेनैव कारणत्वात्, समवायसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वाद्यवच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः । समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्, द्रव्ये तु द्रव्यावयवाः समवायिकरणम्, अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह—पटश्च स्वगतरूपादेरिति । समवायिकारणमित्यनुषज्यते ॥

असमवायिकारणं लक्षयति—कार्येणेति । असमवायिकारणं द्विविधं-कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत् इत्येकम्, कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तदपरमसमवायिकारणमित्यर्थः । अत्र कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः ।

पदकृत्यम् ।

**कार्येणेति**—कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति आत्मविशेषगुणभिन्नत्वे सति यत् कारणं तदसमवायिकारणम् । तन्तुसंयोगादावव्याप्तिवारणाय कार्येणेति । तन्तुरूपादावव्याप्तिवारणाय कारणेनेति । आत्मविशेषगुणेऽतिव्याप्तिवारणायात्मविशेषगुणभिन्नत्वे सतीति । विशेषवारणाय कारणमिति ।

विरला ।

**स्वगतरूपादेरिति** । आदिना गन्धादिपरिग्रहः ॥

ननु पटरूपं प्रति तन्तुरूपमसमवायिकारणं कथं स्यात्तयोः सामानाधिकरण्याभावात्तयोरेव कार्यकारणभावनियमादतो द्विधाऽसमवायिकारणं निर्वक्ति **कार्येण कार-**

समवायिकारणम्। यथा तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य॥

न्यायबोधिनी।

जन्यद्रव्यमात्रेऽवयवसंयोगस्यैवासमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वमिति दर्शयन् प्रथममुदाहरति—यथा तन्तुसंयोगः पटस्येति। यथा तन्तुसंयोगः पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवायसम्बन्धेन विद्यमानत्वे सति कारणत्वात्पटात्मककार्यं प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः। द्वितीयमसमवायिकारणं 'कारणेन सहे'त्यादिना पूर्वोक्तं तदुदाहरति(१)—तन्तुरूपमिति। कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह, एकस्मिन्नर्थे तन्तुरूपे(२) समवेतत्वे सति कारणत्वात् तन्तुरूपं पटगतरूपस्यासमवायिकारणमित्यर्थः। सामान्यलक्षणं तु-समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणत्वमिति। (३)(द्रव्यासमवायिकारणीभूतावयवसंयोगादौ) तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते। एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः, आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात्। (४)अवयविगुणभूतघटपटरू-

विरला।

णेन वेति। द्विविधस्याप्युदाहरणं मूले यथेति। तथा च प्रथमे कार्येण पटेन सहासमवायिनस्तन्तुसंयोगस्य तन्तुरूप एकस्मिन्नर्थे प्रत्यासत्तिरिति, द्वितीये च पटरूपकार्यकारणेन पटेन सहासमवायिनस्तन्तुरूपस्य तन्तुरूप एकस्मिन्नर्थे प्रत्यासत्तिरिति लक्ष-

(१) द्वितीयमुदाहरति—इति म० मु० पु० पाठः।

(२) स्वकार्यसमवायिकारणेन पटेन सह एकस्मिंस्तन्तौ इति० म० मु० पु० पाठः।

(३) ( ) एतच्चिह्नान्तर्गतः पाठो म० मु० पु० नास्ति। समवायसम्बन्धावच्छिन्नासमवायिकारणोदाहरणमाह द्रव्येत्यादिना।

(४) स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नासमवायिकारणोदाहरणमाह अवयवीत्यादिना।

निमित्तकारणस्य किं लक्षणम् ?-

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ॥**

करणस्य निष्कृष्टलक्षणं किम् ?-

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

---

न्यायबोधिनी ।

पादौ त्ववयवगुणीभूतकपालतन्तुरूपादेः स्वपदग्राह्यकपालतन्तुरूपादिसमवायिकपालतन्त्वादिसमवेतत्वसम्बन्धेनैव कारणत्वात् तत्संबन्धावच्छिन्नकारणताश्रयत्वमवयवगुणीभूतकपालरूपतन्तुरूपादौ वर्तते ॥

निमित्तकारणं लक्षयति—तदुभयभिन्नमिति । समवायिकारणभिन्नत्वे सति, असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः ॥

करणलक्षणमुपसंहरति तदेतदिति । यदसाधारणमिति । व्यापारवत्त्वे सतीत्यपि पूरणीयम् , अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः-तन्तुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्वावच्छिन्नं प्रति कारणत्वाद्·

पदकृत्यम्—

तदुभयभिन्नं कारणं निमित्तकारणमिति । समवाय्यसमवायिकारणवारणाय तदुभयभिन्नमिति । विशेषादावतिव्याप्तिवारणाय कारणमिति ।

तदेतदिति । यस्मात्करणत्वघटकं कारणमुपदर्शितं तस्मादेतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणमिति भावः ॥ इति करणप्रपञ्चः ।

विरला ।

णसङ्गतिर्बोध्या । पूर्वत्र समवायेनापरत्र स्वसमवायिसमवेतत्वसम्बन्धेन चैकार्थप्रत्यासत्तिरिति । तथा च समवायस्वसमवायिसमवायान्यतरसम्बन्धेन समवायिकारणे प्रत्यासन्नमात्मविशेषणगुणभिन्नं कारणमसमवायिकारणमिति असमवायिसामान्यलक्षणं पर्यवसितम् । एतेनासमवायिकारणस्य किं सामान्यलक्षणमिति प्रश्नस्योत्तरं बोध्यम् ।

तदुभयेति । इदं च कारणत्रयं भावकार्यस्यैवाभावस्य तु निमित्तकारणमात्रमिति बोद्धव्यम् ।

प्रकृतकरणमुपसंहरन्नाह तदेतदिति ।

प्रत्यक्षप्रमाणलक्षणं किम् ?-

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

न्यायबोधिनी—

साधारणत्वमस्त्येवेत्यतस्तत्र कारणत्ववारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयम् । व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् , भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद्भ्रमस्यादेर्दण्डव्यापारत्वम्(१) । एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्त्वादिव्यापारत्वं कपालतन्त्वादिजन्यत्वे सति कपालतन्त्वादिजन्यघटपटादिजनकत्वात्। करणलक्षणेऽसाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्त्वात्करणत्वं स्यात् अतस्तत्रातिव्याप्तिवारणायासाधारणेति विशेषणम् ॥

षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति । प्रमाभूतप्रत्यक्षादिषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवदसाधारणंकारणमिन्द्रियं भवति ; अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् । आद्यसन्निकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायरूपत्वेनेन्द्रिजन्यत्वाभावाद्व्यापारत्वं न सम्भवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या । मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव सा बोध्या ।

पदकृत्यम् ।

**तत्रेति** । प्रमाणचतुष्टयमध्ये । दण्डादिवारणाय ज्ञानेति । अनुमानादिवारणाय प्रत्यक्षेति ॥

विरला ।

प्रासाङ्गिकं करणप्रपञ्चं निरूप्य पूर्वोद्दिष्टप्रमाणविशेषाणां मध्ये क्रमप्राप्तं प्रत्यक्षप्रमाणलक्षणमाह **तत्रेति** । तत्र—प्रमाणचतुष्टयमध्ये, जनकतया प्रत्यक्षत्वावच्छिन्नजनकत्वे सति प्रत्यक्षत्वावच्छिन्नजनकमित्यर्थः, सन्निकर्षवारणाय सत्यन्तम् । उभयत्र प्रत्यक्षत्वावच्छिन्नत्वनिवेशात्कालविधया प्रत्यक्षजनकध्वंसप्रतियोगिसन्निकर्षे ईश्वरादौ वा न व्यभिचारः । प्रत्यक्षज्ञानकरणं—साक्षात्कारप्रमाकरणम् , प्रत्यक्षं—प्रत्यक्षप्रमाणमित्यर्थः । **शङ्का**—प्रमाया प्रथममुद्दिष्टत्वात्तल्लक्षणं त्यक्त्वा कथमादौ प्रत्यक्ष-

(१) जनकता भ्रमणात्मकव्यापारस्येति म० मु० पु० पाठः ।

प्रत्यक्षप्रमालक्षणं किम् ?-

**इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । ( ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ) तद्द्विविधम्-निर्विकल्पकं सविकल्पकं चेति ॥**

न्यायबोधिनी ।

**प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह**—इन्द्रियार्थसंनिकर्षेति । **जन्यप्रत्यक्षस्यैव लक्ष्यत्वमित्यभिप्रायेणेदं लक्षणम् । ईश्वरप्रत्यक्षसाधारणं तु**—ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति । **ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च तदेव करणं येषां तानि ज्ञानकरणकानि अनुमित्युपमितिशाब्दानि तद्भिन्नं प्रत्यक्षमित्यर्थः । प्रत्यक्षे इन्द्रियाणामेव करणत्वं न तु ज्ञानस्य, तथा च ज्ञानाकरणज्ञानत्वस्य प्रत्यक्षसामान्य एव सत्त्वाल्लक्षणसङ्गतिः । प्रत्यक्षं विभजते**—निर्विकल्पकमिति ॥

पदकृत्यम् ।

**इन्द्रियार्थेति** । इन्द्रियं चक्षुरादिकमर्थो घटादिस्तयोः संनिकर्षः संयोगादिस्तज्जन्यं ज्ञानं प्रत्यक्षमित्यर्थः । सन्निकर्षध्वंसवारणाय ज्ञानमिति । अनुमित्यादिवारणायेन्द्रियार्थसन्निकर्षेति । ननु सोपनेत्रचक्षुषा कथं पदार्थग्रहणं ? चक्षुष उपनेत्रनिरुद्धत्वेन पदार्थेन सह सन्निकर्षाभावात्, कथं वा स्वच्छजाह्नवीसलिलान्तर्गतमत्स्यादेश्चक्षुषा ग्रहणमिति चेन्न । स्वच्छद्रव्यस्य तेजोनिरोधकत्वाभावेन तदन्तश्चक्षुःप्रवेशसम्भवात् । न चेश्वरप्रत्यक्षेऽव्याप्तिरिति वाच्यम् । अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात् ।

विरला ।

प्रमाणलक्षणमिति । **उत्तरम्**—प्रत्यक्षप्रमायाः प्रमाणोपजीवकत्वेन तदुपजीव्य प्रमाणलक्षणस्यैवादावुचितत्वादिति ।

**ज्ञानेति** । नेदं लक्षणं सर्वमूलपुस्तकेषूपलभ्यते न च सर्वैष्टीकाकृद्भिर्व्याख्यातमिति क्षेपकमिति ज्ञायते । ईश्वरप्रत्यक्षसाधारणमितीदं लक्षणमिति कैश्चित्परिगृहीतम् , किन्तु **'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ।'** [ अ० १ आ० १ सू० ४ ] इति न्यायसूत्रानुसारेण जन्यप्रत्यक्षस्यैव निरूपणयित्वादनातिप्रयोजनकम् , तथा च नाव्याप्तिशङ्काप्रसर इति वदामः ।

**द्विविधमिति** । द्विविधमपीदं [१]घ्राणज[२]रासन[३]चाक्षुष[४]श्रावण[५]स्पार्शन[६]मानसभेदात् षड्विधम् । घ्राणजत्वादिकं तु जिघ्रामीत्याद्यनुभवसाक्षिको जातिविशेष इति बोध्यम् ।

निर्विकल्पकलक्षणं किम् ?-

**(१)(तत्र) निष्प्रकारकं ज्ञानं निर्विकल्पकम् (यथा किञ्चिदिदमिति)॥**

सविकल्पकलक्षणं किम् ?-

**सप्रकारकं ज्ञानं सविकल्पकम् । यथा डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति ॥**

---

न्यायबोधिनी ।

**तल्लक्षयति-**(तत्र) निष्प्रकारकमिति । **प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः । निर्विकल्पके चतुर्थी विषयता स्वीक्रियते, त्रिविधविषयतामध्ये एकापि तत्र नास्ति, अतो विशेष्यताशून्यज्ञानत्वं(२) संसर्गताशून्यज्ञानत्वमित्यपि लक्षणं सम्भवति ॥**

**सविकल्पकं लक्षयति—**सप्रकारकमिति । **विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम् । एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वमित्यपि लक्षणं सम्भवति । उदाहरणम्—**यथेति । **इदन्त्वा-**

पदकृत्यम् ।

**तत्र निष्प्रकारकमिति ।** सविकल्पेऽतिव्याप्तिवारणाय निष्प्रकारकमिति । प्रकारवारणाय ज्ञानमिति ।

**सप्रकारकमिति ।** घटादिवारणाय ज्ञानमिति । निर्विकल्पकवारणाय सप्रका-

विरला ।

**यथेति । सिद्धान्तचन्द्रोदयकारव्याख्यानानुसारेणोदाहरणस्पष्टीकरणार्थ-** मसर्वगोऽप्ययं पाठोऽत्र धृतः । नामजात्यादियोजनाशून्यं वस्तुमात्रावगाहिज्ञानं निर्विकल्पकमित्यर्थः । अत्रायं **प्रश्नः**--निर्विकल्पकसद्भावे किं प्रमाणमिति । **उत्तरम्—'अयं पट'** इत्यादिविशिष्टबुद्धिः विशेषणज्ञानजन्या विशिष्टबुद्धित्वात् कुण्डलीतिविशिष्टबुद्धिवदित्यनुमानमिति विद्धि । अत्र पटत्वरूपविशेषणभानमेव निर्विकल्पकमित्युच्यते अनवस्थाभयान्न विशेषणज्ञानं सविकल्पकमिति संक्षेपः ।

**सप्रकारकमिति ।** प्रकारताख्यविषयताविशिष्टमित्यर्थः । तदुदाहरति **डित्थो-**

---

[१] ( ) एतच्चिह्नान्तर्गतस्सटीकमूले म० मु० पु० नास्ति ।

(२) विशेष्यता-प्रकारता-संसर्गताख्यास्त्रिविधा विषयता बोध्याः । एतद्विषयतात्रयविलक्षण-त्वमेव चतुर्थं विषयत्वं निर्विकल्पकज्ञानस्य स्वीकृतमित्यर्थः ।

सन्निकर्षः कतिविधः कश्च सः ?-

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः—संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति ॥**

---

न्यायबोधिनी ।

वच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानम् , इदन्त्वावच्छिन्नविशेष्यतानिरूपितब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ॥

चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसंनिकर्षान्विभजते-संयोग इत्यादि । द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुः संयोगस्य कारणत्वम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनश्रवणानि गुणग्राहकाणि । अतस्त्वगिन्द्रियस्थले (एवं) द्रव्यवृत्तिलौकिकविषयतासंबन्धेन त्वाचप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता । एवं द्र·

पदकृत्यम् ।

रकमिति ।

**प्रत्यक्षेति** । तच्च प्रत्यक्षं षड्विधं-घ्राणजरासनचाक्षुषश्रौत्रत्वाचमानसभेदात् । ननु प्रत्यक्षकारणीभूतेन्द्रियनिष्ठप्रत्यक्षसामानाधिकरण्यघटकः सन्निकर्षः क इत्यपेक्षायां तं विभज्य दर्शयति-**प्रत्यक्षेति** । लौकिकप्रत्यक्षेत्यर्थः ।

विरला ।

**यमिति** । इदं ज्ञानं डित्थत्वप्रकारकडित्थविशेष्यकं, ब्राह्मणत्वप्रकारकब्राह्मणविशेष्यकं, श्यामत्वप्रकारकश्यामविशेष्यकं भवतीति प्रकारताख्यविषयतानिरूपकत्वस्योक्तज्ञाने सत्त्वाल्लक्षणसङ्गतिः ।

उक्तषड्विधप्रत्यक्षहेतुभूतान् षड्विधसन्निकर्षानुदाहरति **प्रत्यक्षेति** । विशेषस्तु न्यायबोधिन्यां द्रष्टव्यः ।

घट(द्रव्य)प्रत्यक्षे कः सन्निकर्षः ?–

## चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ॥

न्यायबोधिनी ।

द्रव्यसमवेतत्वाचप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता। द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता। एवमात्ममानसप्रत्यक्षे मनःसंयोगस्य हेतुता। आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हेतुता । आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता। रसनघ्राणयोस्तु रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या। श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं समवायः संनिकर्षः। शब्दवृत्तिशब्दत्वकत्वखत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता च बोध्या। अभावप्रत्यक्ष इति। विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः। पञ्चविधसंनिकर्षेषु मध्ये संयोगस्थाने संयुक्तपदं समवायस्थाने समवेतपदं च घटयित्वा अभावस्थले निर्वाह्यम्। तथाहि—द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता। द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता। द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता च संनिकर्षः। तत्र घटे पटत्वाभावः संयुक्तविशेषणतया गृह्यते। घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषणतया गृह्यते। घटसमवेतसमवेतरूपत्वादौ नीलत्वाभावश्च संयुक्तसमवेतसमवेतविशेषणतया गृह्यत इति संक्षेपः।

पदकृत्यम्।

संयोगमुदाहरति—चक्षुषेति। तथाच द्रव्यचाक्षुषत्वाचमानसेषु संयोग एव सन्निकर्ष इति भावः।

विरला।

**चक्षुषेति।** घटस्य प्रत्यक्षं घटप्रत्यक्षम्, विषयत्वं षष्ठ्यर्थः, घटविषयकप्रत्यक्षमित्यर्थः। अयं घट इत्याकारकं घटविषयकप्रत्यक्षं यदा चक्षुरिन्द्रियेण जायते तदा सं-

घटरूपप्रत्यक्षे कः संनिकर्षः ?-

**घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः, चक्षुः संयुक्ते घटे रूपस्य समवायात् ॥**

रूपत्वप्रत्यक्षे कः सन्निकर्षः ?-

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात् ॥**

---

पदकृत्यम्।

**घटरूपेति।** चक्षुषा इत्यनुषज्यते। तथा च द्रव्यसमवेतचाक्षुषत्वाचमानस-रासनघ्राणजेषु संयुक्तसमवाय एव सन्निकर्ष इत्यर्थः।

**रूपत्वेति।** रूपत्वात्मकं यत्सामान्यं तत्प्रत्यक्ष इत्यर्थः। अत्रापि चक्षुषा इत्य-नुषज्यते। तथाच द्रव्यसमवेतसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेषु संयुक्तसम-वेतसमवाय एव सन्निकर्ष इति भावः। अथ द्रव्यतत्समवेतप्रत्यक्षेऽपि संयुक्तसमवेत-समवाय एव संनिकर्षोऽस्त्विति चेत्, नैतत्—आत्मनोऽप्यनध्यक्षत्वप्रसङ्गात्।

विरला।

-योग इन्द्रियार्थसन्निकर्षः, इन्द्रियं चक्षुः अर्थो घटः अनयोः संयोगः सम्बन्धः, अवय-वावयविभिन्नद्रव्ययोरेव संयोग इति नियमादित्यर्थः।

**घटरूपेति।** घटे रूपं घटरूपं [समवेतत्वं सप्तम्यर्थः] घटसमवेतरूपमित्यर्थः, तस्य प्रत्यक्षं घटरूपप्रत्यक्षं, विषयत्वं षष्ठ्यर्थः, तथा च घटसमवेतरूपविषयकं घटे रूपमित्याकारं ज्ञानं यदा चक्षुरिन्द्रियेण जन्यते तदा संयुक्तसमवाय इन्द्रियार्थसंनिक-र्षः, इन्द्रियं चक्षुरर्थो घटरूपमनयोः संयुक्तसमवायः, चक्षुःसंयुक्तो घटः तस्मिन् रूप-स्य समवायादिदमेवाह **चक्षुःसंयुक्त इति।**

**रूपत्वेति।** तथा च रूपत्वविषयकं घटरूपे रूपत्वमित्याकारकं ज्ञानं यदा च-क्षुरिन्द्रियेण जन्यते तदा संयुक्तसमवेतसमवाय इन्द्रियार्थसन्निकर्षः, चक्षुःसंयुक्तो घट-स्तत्समवेतं रूपं तस्मिन् रूपत्वस्य समवायो वर्तते जातिव्यक्त्योः समवायादित्येवाह **चक्षुःसंयुक्त इत्यादिना।** अनेन रूपत्वसाक्षात्कारः केनेन्द्रियेण भवति तत्र च कः सन्निकर्ष इत्यस्योत्तरं बोध्यम्।

शब्दप्रत्यक्षे कः संनिकर्षः ?-

**श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः, कर्णविवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात् ॥**

शब्दत्वसाक्षात्कारे कः संनिकर्षः ?-

**शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥**

अभावप्रत्यक्षे कः संनिकर्षः ?-

**अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, घटाभाववद्-**

---

पदकृत्यम् ।

समवायसन्निकर्षमुदाहरति—**श्रोत्रेणेति** । जननीय इति शेषः । ननु श्रोत्रशब्दयोः कथं समवाय इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति—**कर्णेति** । अथ समवायस्य नित्यत्वेन शब्दप्रत्यक्षे को व्यापार इति चेत्, शब्दः श्रोत्रमनःसंयोगो वेति गृहाण ।

**शब्दत्वेति** । श्रोत्रेण जननीये इत्यनुकर्षशेषः ।

**विशेषणेति** । विशेषणभावो विशेष्यभावश्चेति बोध्यम् । इन्द्रियसम्बद्धविशेषणत्वमिन्द्रियसम्बद्धविशेष्यत्वमिति यावत् । विशेषणभावसन्निकर्षमुपपाद्य दर्शयति घ-

विरला ।

**श्रोत्रेणेति** । तथा च श्रोत्रेन्द्रियेण शब्दविषयकम् 'अयं शब्द' इत्याकारकं ज्ञानं यदा जायते तदा समवाय इन्द्रियार्थसन्निकर्षः, श्रोत्रमिन्द्रियं अर्थः शब्दः, अनयोस्सम्बन्धः समवायः श्रोत्रस्याकाशस्वरूपत्वात् शब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायादिति ।

**शब्दत्वेति** । शब्दत्वस्य साक्षाकारः शब्दत्वसाक्षात्कारः, विषयत्वं षष्ठ्यर्थः, शब्दत्वविषयकप्रत्यक्षमित्यर्थः । तथा च शब्दत्वविषयकं 'शब्दे शब्दत्वम्' इत्याकारकं ज्ञानं यदा श्रोत्रेण जन्यते तदा समवेतसमवाय इन्द्रियार्थसन्निकर्षः, श्रोत्रमिन्द्रियमर्थः शब्दत्वं तयोः सम्बन्धः समवेतसमवायः-श्रोत्रसमवेतश्शब्दः तत्र शब्दत्वस्य समवायादिदमेवाह **श्रोतसमवेत** इत्यनेन ।

**अभावेति** । अभावस्य प्रत्यक्षं अभावप्रत्यक्षम्, पूर्ववच्चार्थकत्वात् अभावमि-

भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥

प्रत्यक्षप्रमाणस्य निष्कृष्टं लक्षणं किम् ?-

**एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षं तत्करणमिन्द्रियं, तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ।**

अनुमानस्य किं लक्षणम् ?-

**अनुमितिकरणमनुमानम् ॥**

---

न्यायबोधिनी—

**अनुमानं लक्षयति—अनुमितीति । अनुमितौ व्याप्तिज्ञानं करणं, परामर्शो व्यापारः, अनुमितिः फलं कार्यमित्यर्थः । परामर्शस्य व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् । अनुमितिकरणत्वमनुमा·**

पदकृत्यम् ।

**टाभाववदिति ।** 'इह भूतले घटो नास्ती'त्यादौ विशेष्यतासन्निकर्षोऽवसेयः—सप्तम्यन्तस्य विशेषणत्वात् ।

प्रत्यक्षप्रमाणमुपसंहरति-**एवमिति** । उपदर्शितक्रमेणेत्यर्थः । ननु सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसन्निकर्षः किं न स्यादिति चेन्नेत्याह-**तत्करणमिति** । प्रत्यक्षप्रमाणं निगमयति—**तस्मादिति** । प्रत्यक्षप्रमाकरणत्वादित्यर्थः । **सिद्धमिति** । न्यायसिद्धान्ते सिद्धमित्यर्थः ।

इति पदकृत्यके प्रत्यक्षपरिच्छेदः ॥

प्रत्यक्षानुमानयोः कार्यकारणभावसङ्गतिमभिप्रेत्य प्रत्यक्षानन्तरमनुमानं निरूपयति-**अनुमितीति** । अनुमितेः करणमनुमानमित्यर्थः । तच्च लिङ्गपरामर्श एवेति

विरला ।

षयकप्रत्यक्षं इत्यर्थः । विशेषणविशेष्यभावो इन्द्रियसम्बद्धो ग्राह्यः । यथा घटभाववद्भूतलमिति ज्ञानं यदा चक्षुषा जायते, तदेन्द्रियं चक्षुः इन्द्रियसम्बद्धं भूतलं तत्र च घटाभावस्य विशेषणविशेष्यभावो वर्तते इति भवत्यत्रेन्द्रियसम्बद्धविशेषणविशेष्यभाव इति ।

इति विरलायां प्रत्यक्षखण्डम् ॥

**अनुमितीति** । अनुमितेः करणमनुमितिकरणम् । निरूपितत्वं षष्ठ्यर्थः, तथा चानुमितिनिरूपितकरणत्वमनुमानप्रमाणलक्षणं पर्यवसन्नम् ।

अनुमितिः का ?-

**परामर्शजन्यं ज्ञानमनुमितिः ॥**

परामर्शस्य किं स्वरूपम् ?-

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा वह्निव्याप्यधू-**

न्यायबोधिनी ।

नस्य लक्षणम् । अनुमानं व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापार-द्वारा अनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम् ।

परामर्शजन्यमिति । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् । अत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः अतस्तद्वारणाय परामर्शजन्यत्वे सतीति विशेषणोपादानम् । परार्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय ज्ञानत्वोपादानम् ।

अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—व्याप्तिविशिष्टेति । व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानमिति कर्मधारयः। अत्र विशिष्टपदस्य प्रकरतानिरूपकपरत्वात्पक्षधर्मताया ज्ञानमित्यत्र षष्ठ्या विषयत्वबोधनात् धर्मतापदस्य सम्बन्धार्थकत्वात् कर्मधारयसमासेन समस्यमानपदार्थयोरभेदसंसर्गलाभाच्च व्याप्तिप्रकारकाभिन्नं यत्पक्षसम्बन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते । एवं सति 'धूमो वह्निव्याप्यः आलोक-

पदकृत्यम् ।

निवेदयिष्यते । कुठारादावतिव्याप्तिवारणाय अनुमितीति । प्रत्यक्षादावतिव्याप्तिवारणाय अन्विति ।

नन्वनुमितेरेव दुर्निरूपत्वात्तद्घटितानुमानमपि दुर्निरूपमित्यत आह—**परामर्शेति** । प्रत्यक्षादावतिव्याप्तिवारणाय परामर्शजन्यमिति । परामर्शध्वंसवारणाय ज्ञानमिति । परामर्शप्रत्यक्षवारणाय हेत्वविषयकमित्यपि बोध्यम् ।

**व्याप्तिविशिष्टेति** । विषयितासम्बन्धेन व्याप्तिविशिष्टं पक्षधर्मताज्ञानं परामर्श इत्यर्थः । घटादिज्ञानवारणाय पक्षधर्मतेति । धुमवान्पर्वत इत्यादिज्ञानवारणाय व्या-

विरला ।

अनुमानलक्षणघटकीभूतानुमितिलक्षणमाह **परामर्शजन्यमिति** ।

अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे **व्याप्तिविशिष्टेति** । व्याप्त्या विशिष्टः व्याप्तिविशिष्टः व्याप्तिविशिष्टस्य पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता, तस्याः

**मवानयं पर्वत इति ज्ञानं परामर्शः । तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः ।**

---

न्यायबोधिनी ।

वान्पर्वतः' इत्याकारकसमूहालम्बनेऽप्युक्तपरामर्शलक्षण(१)मस्तीत्यतिव्याप्तिस्तद्वारणाय (२)पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता तच्छालिज्ञानं परामर्श इति निष्कर्षः (कर्तव्यः)। एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्। अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम्–पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपिता या धूमत्वावच्छिन्नप्रकारता तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यता तच्छालिनिर्णयः कारणम्। वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतायाश्चाभेदानङ्गीकर्तृमते वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयः कारणमिति वाच्यम्, स च निर्णयः वह्निव्याप्यधूमवान्पर्वत इत्याकारको बोध्यः ॥

पदकृत्यम् ।

प्तिविशिष्टेति । **तदिति** । परामर्शजन्यमित्यर्थः ।

विरला ।

ज्ञानम् । लक्ष्यमाह **यथेति** । अत्र वह्निनिरूपितव्याप्तिविशिष्टस्य धूमरूपहेतोः पक्षधर्मता—पर्वतादिवृत्तित्वं वर्तते इति लक्षणसमन्वयः । परामर्शजन्यत्वविशिष्टज्ञानत्वरूपानुमितिलक्षणं लक्ष्ये सङ्गमयन् तल्लक्ष्यभूतानुमितिं दर्शयति **तज्जन्यमिति** ।

---

(१) व्याप्तिप्रकारकाभिन्नपक्षसम्बन्धविषयकज्ञानत्वं परामर्शलक्षणमित्यर्थः ।

(२) तथाच वह्निव्याप्यो धूम आलोकवान्पर्वत इत्यत्र समूहालम्बने पर्वतनिष्ठविशेष्यतानिरूपिता याऽऽलोक'हेतु'निष्ठप्रकारता तन्निरूपितव्याप्तिनिष्ठा प्रकारता नास्ति किन्तु धूमनिष्ठविशेष्यतानिरूपितेति [illegible] नास्ति व्याप्तिरिति भावः ।

व्याप्तिः का ?-

**यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः ॥**

## न्यायबोधिनी ।

यत्र यत्रेति । यत्रपदवीप्सा धूमाधिकरणे यावति वह्निमत्त्वला-भाय । यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम् । तदेव स्पष्टयति- साहचर्यनियम इति । एतदर्थस्तु नियतसाहचर्यं व्याप्तिरिति । नियतत्वं व्यापकत्वम् । साहचर्यं (नाम) सामानाधिकरण्यम्, तथा च धूमनियतवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः। अत्र वह्नेर्धूमव्यापकत्वं नाम(१) धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथाहि—धूमाधिकरणे पर्वतचत्वरमहानसादौ वर्तमानो योऽभावः घटत्वाद्यवच्छिन्नप्रतियोगिताकः न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः, कुतः ? पर्वतादौ वह्नेः सत्त्वात् । एवंसति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं वह्नित्वं तद्वत्त्वं वह्नौ वर्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते । तथाच धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरिति फलितमिति ।इयमन्वयव्याप्तिः सिद्धान्तानुसारेण । पूर्वपक्षव्याप्तिस्तु-साध्याभाववदवृत्तित्वम् ।(२)साध्यतावच्छेदकसम्बन्धावच्छिन्नसा-

## पदकृत्यम् ।

**यत्र यत्रेति** । यत्र यत्र धुमस्तत्र तत्राग्निरिति व्याप्तेरभिनयः । तत्र साहचर्यनियम इति लक्षणम् । सहचरतीति सहचरस्तस्य भावः साहचर्यं सामानाधिकरण्य-

## विरला ।

तज्जन्यं-परामर्शजन्यम् ।

परामर्शघटकीभूतव्याप्तिस्वरूपमाह **यत्र यत्रेति** । इत्यन्तो व्याख्याकारः । सह चरत इति सहचरौ समानाधिकरणौ तयोर्भावः साहचर्य––सामानाधिकरणम्––एका-

(१) वह्नौ धूमव्यापकत्वं चेति म० मु० पु० पाठन्तरम् ।

(२) साध्येति। यथा पर्वतो वह्निमान् धूमादित्यत्र सद्धेतौ साध्यं वह्निः साध्याभावो वह्न्यभावस्तद्वान् जलह्रदादिस्तद्वृत्तित्वं मीनादौ अवृत्तित्वं धूमे इति लक्षणसमन्वयः । ननु तथापि समवायेन वह्न्यभावाधिकरणं पर्वतोपि तदवृत्तित्वस्य धूमेऽसत्त्वादव्याप्तिरिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्याभावे विशेषणत्वात्तथाच संयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावस्य

न्यायबोधिनी ।

ध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयाधिकरण्यावच्छिन्नाभाववन्निरू-

पदकृत्यम् ।

मिति यावत् । तस्य नियमो व्याप्तिरित्यर्थः । स चाव्यभिचरितत्वम् । तच्च व्यभिचाराभावः । व्यभिचारश्च साध्याभाववद्वृत्तित्वम् । तथाच साध्याभाववद्वृत्तित्वं

विरला ।

धिकरणवृत्तित्वमिति यावत् । तस्य नियमोऽवश्यम्भावः, तथा चावश्यंभाविसाध्यसामानाधिकरण्यं हेतुनिष्ठा व्याप्तिरिति फलितम् । अत्र प्रश्नः—का पूर्वलक्षव्याप्तिः ? उ-

---

जलह्रदादावेव सत्त्वात्तदवृत्तित्वस्य धूमेऽसत्त्वान्नाव्याप्तिः । नचैवमपि संयोगेन महानसीयवह्न्यभावस्य वह्निघटोभयाभावस्य च पर्वते सत्त्वात्तदवृत्तित्वस्य धूमेऽभावात्पुनस्तदवस्थैवाव्याप्तिरिति वाच्यम्।

साध्यतावच्छेदकेतरधर्मानवच्छिन्नसकलसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्याप्यभावे विवक्षणीयत्वेनोभयाभावस्य वह्नित्वेतरघटत्वावच्छिन्नत्वेन महानसीयवह्न्यभावस्य च सकलसाध्यतावच्छेदकानवच्छिन्नत्वेन च धर्तुमशक्यतया उक्तविधस्य संयोगेन वह्नित्वेन वह्निसामान्याभावस्याधिकरणे ह्रदे धूमस्यावृत्तित्वान्नाव्याप्तिः । न च तत्रापि समवायेन कपिसंयोगाभाववति मूलावच्छिन्नैतद्वृक्षे एतद्वृक्षत्वस्य सत्त्वात्कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिरिति वाच्यम् । प्रतियोगिवैयधिकरण्यस्याप्यभावे निवेशनीयतया कपिसंयोगाभावस्य वृक्षे प्रतियोगिसमानाधिकरणत्वेनाव्याप्तिवारणात् । ननु विशिष्टसत्तावान् जातेरित्यत्र विशिष्टस्य शुद्धानतिरेकित्वेन गुणादौ विशिष्टसत्ताभावस्य विशिष्टसत्ताभावप्रतियोगिशुद्धसत्तारूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणसाध्याभाववति सामान्यादौ जातेरवृत्तित्वादतिव्याप्तिरिति चेन्न । प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयाधिकरण्यस्याभावे निवेशनीयत्वात्, तथाच विशिष्टसत्तात्वावच्छिन्नविशिष्टसत्ताधिकरणत्वस्य गुणादावभावात्तत्र हेतोरवृत्तित्वान्नातिव्याप्तिः । ज्ञानवान् सत्त्वादित्यत्र घटादेर्विषयतया ज्ञानाधिकरणत्वेन प्रतियोगिव्यधिकरणज्ञानाभाववति सामान्यादौ सत्ताया अवृत्तित्वेनातिव्याप्तिवारणाय प्रतियोगितावच्छेदकसम्बन्धनिवेशः, विषयताया वृत्त्यनियामकतया प्रतियोगितावच्छेदकसम्बन्धत्वासम्भवेन समवायेन प्रतियोगिव्यधिकरणज्ञानाभाववति घटादौ सत्ताया वृत्तित्वान्नातिव्याप्तिः । न चात्मभिन्नं द्रव्यत्वादित्यादौ प्रतियोगिव्यधिकरणसाध्याभाववति आत्मनि द्रव्यत्वस्य कालिकसम्बन्धेनावृत्तित्वादतिव्याप्तिरिति वाच्यम् । हेतुतावच्छेदकसम्बन्धेनावृत्तित्वस्य विवक्षणीयतया समवायेन द्रव्यत्वस्यात्मनि वृत्तित्वान्नातिव्याप्तिः । धूमवान् वह्नेरित्यत्र साध्याववज्जलह्रदनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य वह्नौ सत्त्वादतिव्याप्तिवारणाय वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावनिवेशोऽपि बोध्यः, तथाच साध्याभाववद्ध्रदनिरूपितवृत्तित्वाभावस्य वह्नौ सत्त्वेऽपि साध्याभाववदयोगोलकनिरूपितवृत्तित्वाभावस्य वह्नौ असत्त्वान्नातिव्याप्तिः ।

पक्षधर्मतायाः किं लक्षणम् ?-

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥**

अनुमानं कतिविधम् ?-

**अनुमानं द्विविधं-स्वार्थं परार्थं च ॥**

न्यायबोधिनी ।

पितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिता-काभावो व्याप्तिरित्यर्थः। तच्च केवलान्वयिन्यव्याप्तमिति सिद्धान्ता-नुसरणम्।

अनुमानं विभजते स्वार्थमिति । स्वार्थानुमानं नाम न्यायाप्रयो-ज्यानुमानम् ।

पदकृत्यम् ।

व्याप्तिरिति पर्यवसन्नम् । महानसं वह्निमत् धूमादित्यादौ साध्यो वह्निस्तदभाववान् जल-ह्रदादिस्तद्वृत्तित्वं नौकादावन्वृत्तित्वं प्रकृते हेतुभूते धूमे इति कृत्वा लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ साध्यो धूमस्तदभाववदयोगोलकं तद्वृत्तित्वमेव वह्न्यादाविति नाति व्याप्तिः।

ननु ज्ञातेयं व्याप्तिः, पक्षधर्मताज्ञानमित्यत्र का नाम पक्षधर्मता इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति—**व्याप्यस्येति**। व्याप्यो नाम व्याप्त्याश्रयः, स च धूमादिरेव तस्य पर्वतादिवृत्तित्वं पक्षधर्मतेत्यर्थः।

अथ कथमनुमानमनुमितिकरणं कथं वा तस्मादनुमितेर्जनिरिति जिज्ञासमानं प्रति लाघवादनुमानविभागमुखेनैव बुबोधयिषुरनुमानं विभजते-**अनुमानमिति**। द्वैविध्यं दर्शयति-**स्वार्थं परार्थं चेति**। स्वस्यार्थः प्रयोजनं यस्मात् तत्स्वार्थमिति समासः।

विरला ।

**त्तरम्**—साध्याभाववदवृत्तित्वम्, साध्यवदन्यावृत्तित्वं वा । पुनः **प्रश्नः**—का सिद्धान्तव्याप्तिः ? **उत्तरं**—हेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसा-ध्यसामानाधिकरण्यम् इति ।

व्याप्तिं निरूप्य पक्षधर्मतां निरूपयति **व्याप्यस्येति** । व्याप्यस्य व्याप्तिविशि-ष्टस्य धूमादिरूपहेतोर्यत्पर्वतादिवृत्तित्वं तदेव पक्षधर्मतेत्युच्यत इत्यर्थः।

**द्विविधमिति**। तथाच स्वार्थानुमितित्वपरार्थानुमितित्वेऽनुमितित्वव्याप्यजाती,

किं नाम स्वार्थानुमानम् ?—

**स्वार्थं स्वानुमितिहेतुः, तथाहि—स्वयमेव भूयोदर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति—'यत्र यत्र धूमस्तत्र तत्राग्निः' इति । तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते, अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ॥**

न्यायबोधिनी ।

न्यायप्रयोज्यानुमानं परार्थानुमानम् । न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम् । अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम्(१) ।

पदकृत्यम् ।

स्वप्रयोजनं च स्वस्यानुमेयप्रतिपत्तिः । एवं परार्थमित्यस्यापि ।

**अयमिति** । व्याप्तिबलेन लीनमर्थं गमयतीति लिङ्गम् । तच्च धूमादि । तस्य परामर्शो ज्ञानविशेष इत्यर्थः । **तस्मादिति** । लिङ्गपरामर्शादित्यर्थः । स्वार्थानुमानमुपसंहरति—**तदेतदिति** । यस्मादिदं स्वप्रतिपत्तिहेतुस्तस्मादेतत्स्वार्था

विरला ।

तद्धर्मावच्छिन्नकरणेऽनुमाने क्रमेण स्वार्थपरार्थानुमाने इत्यर्थः ।

स्वार्थानुमानस्वरूपमाह **स्वानुमितीति** । स्वार्थानुमितीत्यर्थः । तद्गते—पर्वतगते । अग्नौ इत्यत्र सप्तम्यर्थो विषयत्वम् , तथाच पर्वतवृत्तिवह्निविषयसन्देहवान् इत्यर्थः । पर्वते इत्यत्रापि पूर्ववत्सप्तम्यर्थः, धूममिति द्वितीयार्थः प्रकारत्वं, पश्यन्निति दृशिधात्वर्थः चाक्षुषप्रत्यक्षम् , तथाच पर्वतविशेष्यकधूमप्रकारकचाक्षुषप्रत्यक्षवान् इत्यर्थः । व्याप्तिमिति द्वितीयार्थो विषयत्वं, धात्वर्थः स्मृत्यात्मकं ज्ञानं, आश्रयत्वमाख्यातार्थः, तथाच यत्र धूमस्तत्राऽग्निरित्याकारकव्याप्तिविषयकं यत्स्मृत्यात्यकं ज्ञानं तदाश्रय इत्यर्थः । तदनन्तरं—व्याप्तिस्मरणानन्तरम् । अयमेवेति । परामर्शमपेक्ष्य पुंल्लिङ्गत्वम् । तस्मात्—वह्निव्याप्यधूमवानयं पर्वत इति लिङ्गपरामर्शात् । तदिति स्वार्थानु-

(१) प्रतिज्ञाद्यन्यतमत्वं च प्रतिज्ञादिपंचकाभिन्नभिन्नत्वं तच्च प्रतिज्ञादिपंचावयवेष्विति लक्षणसमन्वयः ।

परार्थानुमानस्य किं स्वरूपम् ?—

यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम् । यथा पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो धूमवान्स स वह्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथेति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ॥

पञ्चावयवाः के ?—

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतो वह्निमानिति प्रतिज्ञा । धूमवत्त्वादिति हेतुः । यो यो धूमवान् स स

पदकृत्यम् ।

-नुमानमित्यर्थः ।

क्रमप्राप्तं परार्थानुमानमाह—**यत्त्विति** । यत्पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानमिति सम्बन्धः । **पञ्चावयवेति** । अथावयवत्वं नाम द्रव्यसमवायिकारणत्वम्, प्रतिज्ञादिषु तदसम्भवात्कथमेतेऽवयवाः स्युरिति चेत् । अनुमानवाक्यैकदेशत्वात्तु अवयवा इत्युपचर्यत इति गृहाण । नन्वेवमपि पञ्चावयववाक्यवस्यानुमानत्वमेव न विचारसहं तस्य लिङ्गपरामर्शत्वाभावादिति चेत् । मैवम् । लिङ्गपरामर्शप्रयोजकलिङ्गप्रतिपादकत्वेनानुमानमित्युपचारमात्रत्वात् । तदुदाहरति—**यथेति** । **तथा चायमिति** । अयं च–पर्वतः, तथा–वह्निव्याप्यधूमवानित्यर्थः । **तस्मात्तथेति** । वह्निव्याप्यधूमवत्वाद्वह्निमानित्यर्थः । **अनेनेति** । अनेन पञ्चावयववाक्येनेत्यर्थः ।

ननु पञ्चावयववाक्यमित्यत्र के ते पञ्चावयवा अतस्तान्दर्शयति—**प्रतिज्ञेति** । प्रतिज्ञाद्यन्यतमत्वमवयवत्वम् । साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा । पञ्चम्यन्तं तृती-

विरला ।

-मानोपक्षया नपुंसकत्वम् ।

स्वार्थानुमानं निरूप्य परार्थानुमानं निरूपयति **यत्त्विति** । अस्य परार्थानुमानमित्यनेनान्वयः । तत्—पञ्चावयवानुमानवाक्यम् । उदाहरति **यथेति** । **अग्निं प्रतिपद्यत इति** । द्वितीयार्थो विषयत्वम्, प्रतिपूर्वपद्लधातोरनुमित्यात्मकं ज्ञानमर्थः, आश्रयत्वमाख्यातार्थः, तथा च वह्निविषयकानुमित्यात्मकज्ञानाश्रयो भवतीत्यर्थः ।

पञ्चावयववाक्यघटकीभूतानामवयवानां नामान्याह **प्रतिज्ञेति** । उक्तानुमानवाक्ये

**वह्निमानित्युदाहरणम् । तथा चायमित्युपनयः । तस्मात्तथेति निगमनम् ॥**

स्वार्थानुमितिपरार्थानुमित्योः किं करणम् ?—

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥**

लिङ्गं कतिविधं किञ्चान्वयव्यतिरेकिलक्षणम् ?—

**लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि**

---

पदकृत्यम् ।

यान्तं वा लिङ्गवचनं हेतुः । व्याप्तिप्रतिपादकदृष्टान्तवचनमुदाहरणम् । उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनमुपनयः । पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनं निगमनम् । इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन्विशिष्य दर्शयति—**पर्वतो वह्निमानित्यादिना !**

**लिङ्गेति** । ज्ञायमानं लिङ्गमनुमितिकरणमिति वृद्धोक्तं न युक्तम् , इयं यज्ञशाला वह्निमती अतीतधूमादित्यादौ लिङ्गाभावेऽप्यनुमितिदर्शनादित्यभिप्रायवाँल्लिङ्गपरामर्श एव करणमित्याचष्टे-**लिङ्गपरामर्श एवेति** । अनुमानमुपसंहरति **तस्मादिति** । अनुमितिकरणत्वादित्यर्थः । अयमेव तृतीयज्ञानमित्युच्यते । तथाहि—महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम् । पक्षे यद्धूमज्ञानं तद्द्वितियम् । अत्रैव वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम् । इदमेव लिङ्गपरामर्श इत्युच्यते । **अनुमानमिति** । व्यापारवत्कारणं करणमिति मते व्याप्तिज्ञानमेवानुमानं लिङ्गपरामर्शो व्यापार इत्यवसेयम् ।

विरला ।

प्रतिज्ञादीन् विभज्य प्रदर्शयति **पर्वतो वह्निमानिति** । अत्र पक्षज्ञानं प्रतिज्ञाप्रयोजनम् ,लिङ्गज्ञानं हेतुप्रयोजनम् , व्याप्तिज्ञानमुदाहरणप्रयोजनम् , पक्षधर्मताज्ञानमुपनयप्रयोजनम् , अबाधितत्वादिकं निगमनप्रयोजनं द्रष्टव्यम् ।

ज्ञायमानं लिङ्गमनुमितिकरणमिति प्राचीनोक्तं न युक्तम्-इयं यज्ञशाला वह्निमती अतीतधूमादित्यादौ लिङ्गाभावेऽप्यनुमितिदर्शनादित्याभिप्रायवांल्लिङ्गपरामर्श एव करणमिति व्याचष्टे **स्वार्थेति** । अनुमानं निष्कर्षयति **तस्मादिति** ।

लिङ्गं विभजते **लिङ्गमिति** । हेतुरित्यर्थः ।

चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि, यथा वह्नौ

न्यायबोधिनी ।

अन्वयेनेति । व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः । व्यतिरेकेणेति । व्यतिरेको नामाभावः । तथा च साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः । इयं च व्याप्तिः 'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव' इति । यत्रपदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते । वह्न्यभावे धूमाभावव्याप्यत्वं च लभ्यते । एवं च वह्न्यभावनिष्ठव्याप्तेः (१)स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्ब-

पदकृत्यम् ।

अन्वयव्यतिरेकिणो लक्षणमाह—अन्वयेनेति । तृतीयायाः प्रयोज्यत्वमर्थः । साध्यसाधनयोः साहचर्यमन्वयः । तदभावयोः साहचर्यं व्यतिरेकः । तथा चान्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकीत्यर्थः । केवलव्यतिरेकिण्यतिव्याप्तिवारणाय अन्वयेनेति । केवलान्वयिनि व्यभिचारवारणाय व्यतिरेकेणेति । तथा चान्वयव्याप्तिरुपदर्शितैव । व्यतिरेकव्याप्तिश्च साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । तदुक्तं—

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः (२) ॥ इति ।

विरला ।

अत्र पूर्वपक्षः—व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेवानुमितिसम्भवे व्याप्तिविशिष्टलिङ्गपरामर्शस्य हेतुत्वं किमित्यङ्गीकरणीयमिति । उत्तरम्—वह्निव्याप्यवानिति शाब्दपरामर्शस्थले विशिष्टपरामर्शस्यावश्यकत्वात् लाघवेन सर्वत्र परामर्शस्यैव करणत्वादिति ।

---

(१) स्वाश्रयेति । स्वं व्याप्तिः तदाश्रयो वह्न्यभावस्तद्व्यापकीभूतोऽभावो धूमाभावस्तत्प्रतियोगित्वं धूम इति व्यतिरेकव्याप्तेर्धूमनिष्ठत्वं बोध्यम ।

(२) अत्ययोऽभाव इत्यर्थः ।

**साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद इति व्यतिरेकव्याप्तिः॥**

केवलान्वयिनः किं लक्षणम् ?—

**अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा घटोऽभिधेयः प्रमेय-**

---

न्यायबोधिनी ।

न्धेन धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन धूमव्यापकवह्निसामाना-धिकरण्यरूपान्वयव्याप्तिमत्त्वेन चान्वयव्यतिरेकित्वेन गीयते । व्य-तिरेकपरामर्शस्तु वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत इत्याकारकः ।

केवलान्वयिनो लक्षणमाह—अन्वयेति । (१)व्यतिरेकव्याप्तिशून्य-

पदकृत्यम् ।

केवलान्वयिनो लक्षणमाह—**अन्वयेति** । अन्वयेनैव व्याप्तिर्यस्मिन् स तथा ।

विरला ।

अन्वयव्यतिरेकिणमुदाहरति **यथेति** । वह्नौ—वह्नित्वावच्छिन्नसाध्ये सति, धूमव-त्वम्—धूमोऽन्वयव्यतिरेकी हेतुरित्यर्थः । व्याप्तिद्वयमभिनीय दर्शयति **यत्र धूम-स्तत्रेति । अयमभिप्रायः**—हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, साध्याभावहेत्वभाव-योर्व्याप्तिर्व्यतिरेकव्याप्तिः । अन्वयव्याप्तौ हेतुर्व्याप्यः साध्यं व्यापकं, व्यतिरेकव्याप्तौ साध्याभावो व्याप्यः हेत्वभावो व्यापकः । 'व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्' इत्युक्तेरन्वयव्याप्तौ हेतोः प्रथमं निर्देशः, अनन्तरं साध्यस्य । व्यतिरेकव्याप्तौ साध्या-भावस्य प्रथमं निर्देशः, अनन्तरं हेत्वभावस्य । प्रकृते च धूमो हेतुः वह्निः साध्यः । अत एवान्वयव्याप्तौ धूमस्य प्रथमं निर्देशः, अनन्तरं साध्यस्य । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्तीति व्यतिरेकव्याप्तौ साध्याभावस्य प्रथमं निर्देशः, अनन्तरं हेत्व-भावस्येति ।

**अन्वयेति** । केवलान्वयिस्थले पञ्चावयववाक्यं दर्शयति **यथेति** । **अत्र घटः**

---

(१) हेतुसाध्ययोरव्यतिरेके मात्रपदार्थघटितं लक्षणार्थमाह व्यतिरेकेति । साध्यमात्रस्याव्य-तिरेकेपि केवलान्वयित्वं संभवतीत्यभिप्रायेण लक्षणान्तरमाहाथवेति । घटोऽभिधेयो द्रव्यत्वादिति त-स्योदाहरणं बोध्यम् । न्यायाङ्गहेतुतदतिरिक्तसाधारणकेवलान्वयिशब्दार्थमाह अत्यन्तेति । अव्याप्त-मिति । [illegible] तयोर्निरूपकत्वादित्यर्थः । द्वयविरोधीति ।

**त्वात्पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्व-स्यापि प्रमेयत्वादभिधेयत्वाच्च ॥**

न्यायबोधिनी ।

त्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् । अथवा केवलान्वयि-साध्यकत्वं तत् । एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि सङ्गच्छते । साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावात् 'अन्वयमात्रव्या-प्तिकं केवलान्वयी'ति मूलकारोक्तं लक्षणमुपपन्नम् । अत्यन्ताभावाप्र-तियोगित्वं केवलान्वयित्वम् । न चात्यन्ताभावाप्रतियोगित्वरूपके-वलान्वयित्वमाकाशाभावे संयोगाभावे चाव्याप्तमिति वाच्यम् । स्व-विरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात् । तथा चानयोः एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं(१) केवलान्व-यित्वमिति नव्याः ।

पदकृत्यम् ।

प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति-**अत्रेति** । अभिधेयत्वसाध्यकानुमान इत्यर्थः । ननु कुतस्तन्निषेधोऽतस्तत्र हेतुमाह—**सर्वस्येति** । पदार्थमात्रस्येत्यर्थः । तथाच सकलपदाभिधेयत्वस्येश्वरप्रमाविषयत्वस्य चात्यन्ताभावाप्रतियोगित्वरूपकेवला-न्वयित्वेन तदभावाप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न सम्भवत्येवेति भावः ।

विरला ।

पक्षः, अभिधेयत्वं साध्यं, प्रमेयत्वं हेतुः । अभिधेयत्वं—वाच्यत्वम् , प्रमेयत्वं-प्रमा-विषयत्वम् । **पटवदिति** । यो यः प्रमेयत्ववान् स सोऽभिधेयत्ववान् यथा पट इ-त्यर्थः । तथा चायं तस्मात्तथेति उपनयनिगमनावयवयोः पूरणं कर्तव्यम् । तथा चा-त्रोक्तरीत्याऽन्वयव्याप्तिर्वर्तते इत्यर्थः । व्यतिरेकव्याप्तिर्नास्तीत्याह **अत्रेति** । अभि-धेयत्वाभाववतः प्रमेयत्वाभाववतश्चाप्रसिद्धेर्व्यतिरेकदृष्टान्तो नास्तीति व्यतिरेकव्याप्त्य-भाव इति भावः ।

संयोगाभावाभावो न संयोगाभावविरोधी वृक्षादावुभयोः सत्त्वात्, आकाशरूप आकाशाभावाभाव-स्तु न वृत्तिमानाकाशस्यावृत्तिपदार्थत्वादिति भावः । एकजातीयसम्बन्धेन—स्वरूपसम्बन्धेन ।

(१) 'विद्यमानत्वान्नव्याप्ति'रिति पाठान्तरम् ।

केवलव्यतिरेकिणः किं लक्षणम् ?—

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्, यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा

---

न्यायबोधिनी ।

केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । (१)निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । यथा पृथिवीति । अत्र पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेदः साध्यम्, गन्धवत्त्वं हेतुः । अत्र यद्गन्धवत्तदितरभेदवदित्यन्वयदृष्टान्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवः, किन्तु यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिकमिति व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते । इममेवार्थं मनसि निधाय 'यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलमि'ति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् । एवंप्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरमितरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्याकारकव्यतिरेकिपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका पृथिवी इतरभेदवतीत्याकारकानुमितिर्जायते इति तत्त्वम् । यथाश्रुतमूलार्थस्तु—यथा जलमिति । यत्–जलं, इतरेभ्यो न भिद्यते–इतरभेदाभाववत्, न तद्गन्धवत्–जलमितरभेदाभावव्यापकगन्धाभाववत् । (इत्येवंप्रकारेण गन्धाभावनिरूपि-

पदकृत्यम् ।

केवलव्यतिरेकिणो लक्षणमाह–व्यतिरेकेति । व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्त-

---

(१) मात्रशब्दार्थघटितं व्यतिरेकिलक्षणमाह निश्चितेति । पृथिवीत्वावच्छिन्नं पृथिवीमात्रम् । अन्वयदृष्टान्ताभावादिति । पृथिवीभिन्नस्य समवायेन गन्धशून्यत्वादिति शेषः । गृह्यते इति । अन्वयव्याप्तौ साध्यं व्यापकं हेतुश्च व्याप्यो भवति, व्यतिरेकव्याप्तौ तु साध्याभावो व्याप्यः हेत्वभावो व्यापको भवतीति नियमादित्यर्थः ।

**जलम्, न चेयं तथा, तस्मान्न तथेति, अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ॥**

न्यायबोधिनी ।

ता व्याप्यता इतरभेदाभावे गृह्यते इत्यर्थः । )(१) न चेयं तथेति । इयं–पृथिवी, न तथा—इतरभेदाभावव्यापकगन्धाभाववती न, किन्तु तदभावात्मकगन्धवती । तस्मान्न तथेतीति । तस्मात्—गन्धाभावाभाववत्त्वात् । (तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मादिति पञ्चम्यन्तात् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः । ) न तथा–इतरभेदाभाववती न, किन्तु इतरभेदाभावाभाववती (२)इतरभेदवतीत्यर्थः ।

पदकृत्यम् ।

था । अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय मात्रेति । न चेयं तथेति । इयं–पृथिवी, न तथा—न गन्धाभाववतीत्यर्थः । तस्मान्न तथेति । गन्धाभाववत्त्वाभावादितरभेदाभाववती नेत्यर्थः । नन्वत्र किमिति नान्वयव्याप्तिरित्याशङ्क्य परिहरति–अत्रेति । इतरभेदसाधकानुमान इत्यर्थः । इदमुपलक्षणम् । जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवम् तन्नैवम् यथा घटः । प्रत्यक्षादिकं प्रमाणमिति व्यवहर्तव्यं प्रमाकरणत्वात् यन्नैवं तन्नैवम् यथा प्रत्यक्षाभासः । विवादास्पदम् आकाशमिति व्यवहर्तव्यं शब्दवत्त्वादित्यादिकमपि केवलव्यतिरेकीति द्रष्टव्यम् ।

अत्रेदं बोध्यम्—अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं स्वसाध्यं साधयितुं क्षमते । तानि कानीति चेच्छ्रूयताम्—पक्षधर्मत्वं बिपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । अबाधितः साध्यरूपो विषयो यस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम् । एवं साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष इत्युच्यते, स नास्ति यस्य सोऽसत्प्रतिपक्षः, तस्य भावस्तत्त्वमिति बोध्यम्, केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात् । केवलव्यतिरेक्यपि तथा, तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययादिति, उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात् ।

---

(१) ( ) एतच्चिह्नमध्यगः पाठो म० मु० पु० नास्ति । एवमग्रेऽपि ।

(२) इति पर्यवसन्न इति म० मु० पु० पा० ।

पक्षस्य किं लक्षणम् ?—

**सन्दिग्धसाध्यवान् पक्षः । यथा धूमवत्त्वे हेतौ पर्वतः ॥**

सपक्षस्य किं लक्षणम् ?—

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ॥**

---

न्यायबोधिनी ।

पक्षलक्षणमाह—सन्दिग्धेति । साध्यप्रकारकसन्देहविशेष्यत्वं पक्षत्वम् । सन्देहश्च पर्वतो वह्निमान्न वेत्याकारः । इदं च लक्षणमनुमितेः पूर्वं साध्यसन्देहो नियमेन जायत इत्यभिप्रायेण प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसन्देहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारिकाया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम्(१) ।

सपक्षलक्षणमाह—निश्चितेति । साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् । निश्चयश्च महानसं वह्निमदित्याकारकः ।

पदकृत्यम् ।

अथ पृथिवीमात्रस्य पक्षत्वादित्यत्र किं नाम पक्षतेत्यपेक्षायां तां निर्वक्ति—सन्दिग्धेति । सपक्षवारणाय सन्दिग्धेति ।

निश्चितेति । पक्षेऽतिव्याप्तिवारणाय निश्चितेति । तत्रैवेति । धूमवत्त्वे हेतावेवेत्यर्थः ।

विरला ।

प्रसङ्गसङ्गत्या पक्षलक्षणमाह सन्दिग्धेति । विशेष्यतासम्बन्धेन साध्यप्रकारकसन्देहवत्त्वं पक्षलक्षणं बोध्यम् । उदाहरति यथेति । घनगर्जितेनानुमितिस्थले सन्देहाभावान्नेयं पक्षता, किन्तु सिषाधयिषाविरहविशिष्टसिद्ध्यभाव इति नव्याः ।

उक्तसङ्गत्यैव क्रमशः सपक्षविपक्षावाह निश्चितेति । विशेष्यतया साध्यप्रकारकनिश्चयत्वं सपक्षत्वमित्यर्थः । तत्रैव—धूमानुमान एव ।

---

(१) स्थिरीकृतं पक्षलक्षणमित्यर्थः ।

विपक्षस्य किं लक्षणम् ?—

**निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ॥**

हेत्वाभासाः कतिविधाः ?—

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः ॥**

न्यायबोधिनी—

**विपक्षलक्षणमाह** निश्चितसाध्याभावेति । **साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् । निश्चयश्च ह्रदो वह्न्यभाववानित्याकारकः ।**

**एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति** सव्यभिचारेति । **हेतुवदाभासन्त इति हेत्वाभासाः, दुष्टहेतव इत्यर्थः । दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः । एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः । यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यस्य लक्षणम् । (१)हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा । अतो वादिनिग्रहाय वादिनोद्भावितहेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः ।**

पदकृत्यम् ।

**निश्चितेति** । सपक्षेऽतिव्याप्तिवारणाय साध्येति । पक्षेऽतिव्याप्तिवारणाय निश्चितेति । तत्रैव—धूमवत्त्व एव ।

हेतून्निरूप्य प्रसङ्गाद्धेत्वाभासानाह—**सव्यभिचारेति** । हेतुवदाभासन्ते इति हेत्वाभासाः । तत्त्वं चानुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् । बाधस्थले वह्निरनुष्ण इत्यनुमितिप्रतिबन्धकं यज्ज्ञानमुष्णत्ववद्वह्नावनुष्णत्वसाधकं द्रव्यत्वमित्या-

विरला ।

**निश्चितेति** । अत्रापि पूर्ववदर्थो बोध्यः ।

एतावता प्रबन्धेन सद्धेतून् निरूप्यासद्धेतून् निरूपयितुं तान् विभजते **सव्यभिचारेति** । हेतुवदवभासन्त इति हेत्वाभासाः दुष्टहेतव इत्यर्थः । अथवा हेतोराभासाः

---

(१) हेताविति । धूमवान् वह्नेरित्यत्र वह्निहेतौ धूमाभाववद्वृत्तित्वरूपव्यभिचारदोषज्ञाने धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानकरणप्रतिबन्धात्, वह्निरनुष्णो द्रव्यत्वादित्यत्रोष्णो वह्निरिति बाधज्ञाने जातेऽनुष्णो वह्निरित्यनुमितिप्रतिबन्धाच्च लक्षणसमन्वयो बोध्यः ।

सव्यभिचारस्य लक्षणं किं, कतिविधश्च सः ?—

सव्यभिचारोऽनैकान्तिकः । स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात् ।

साधारणस्य किं लक्षणम् ?—

तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा पर्वतो वह्निमान् प्रमेयत्वादिति । (१)(अत्र) प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमानत्वात् ॥

---

न्यायबोधिनी ।

सव्यभिचारं विभज्य दर्शयति साधारणेति । साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम् । साधारणत्वं–साध्याभाववद्वृत्तित्वम् । वह्निमान् प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

पदकृत्यम् ।

कारकं तद्विषयत्वस्य विषयतासम्बन्धेन द्रव्यत्वरूपहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः । सद्धेतुवारणाय यथार्थेति । घटादिवारणाय अनुमितितत्करणप्रतिबन्धकेति । व्यभिचारिणि अव्याप्तिवारणाय तत्करणान्यतरेति ।

तत्रेति । साधारणादित्रितयमध्य इत्यर्थः । अथ विरुद्धेऽतिप्रसक्तिरिति मा स्म स्प्यः, सपक्षवृत्तित्वस्यापि निवेशात् । अथैवमपि स्वरूपासिद्धे दूषणं जागर्तीति मा वह

विरला—

हेत्वाभासाः व्यभिचारादयो दोषाः, तद्वत्वं च हेतौ एकज्ञानविषयत्वसम्बन्धेन बोध्यम् । हेत्वाभाससामान्यलक्षणं न्यायबोधिन्यादौ उदाहरणं च पदकृत्ये द्रष्टव्यम् ।

अनैकान्तिक इति । एकान्ते--नियमे भव एकान्तः नियत इति यावत्, तदन्योऽनैकान्तो--व्यभिचारी साध्यवदन्यवृत्तिः साध्यासमानाधिकरणः साध्यसन्देहवांश्चेति यावत् । तत्र—साधारणासाधारणानुपसंहारिमध्ये । साध्याभाववद्वृत्तिरिति । साध्यस्याभाव इत्यत्र षष्ठ्यर्थः प्रतियोगित्वम्, तथा च साध्यप्रतियोगिकाभाववद्वृत्तिर्यो हेतुः स साधारणव्यभिचारी हेत्वाभास इत्यर्थः । उदाहरति पर्वत

---

(१)( )एतच्चिह्नान्तर्गतः पाठः का० मु० पु० नास्ति । एवमग्रे ।

असाधारणस्य किं लक्षणम्?

**सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः। यथा शब्दोनित्यः शब्दत्वादिति। (अत्र) शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति।**

---

न्यायबोधिनी।

असाधारण इति। (१)सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम्। साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम्। हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

पदकृत्यम्।

सर्वम्, पक्षवृत्तित्वस्यापि तथात्वात्।

**पक्षमात्रेति**। सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तत इति सपक्षविपक्षव्यावृत्तः। केवलव्यतिरेकिवारणाय तद्भिन्न इत्यपि देयम्।

विरला।

**इति**। अत्र वह्निरूपसाध्यप्रतियोगिकाभाववति ह्रदे प्रमेयत्वसत्त्वादयं हेतुः साधारणव्यभिचारीत्यर्थः।

असाधारणव्यभिचारिणं लक्षयति **सर्वेति**। सपक्षविपक्षौ पूर्वलक्षितौ, तद्व्यावृत्तत्वं तदवृत्तित्वम्। उदाहरति **यथेति**। अत्रानुमाने शब्दः पक्षो नित्यत्वं साध्यं शब्दत्वादिति हेतुः। अयं च हेतुर्निश्चितनित्यत्वेभ्यो आकाशादिभ्यो निश्चितानित्यत्वेभ्यो घटादिभ्यश्च व्यावृत्त इति असाधारणव्यभिचारी, न हि आकाशादौ घटादौ च शब्दत्वं वर्तते तस्य शब्दमात्रवृत्तित्वादित्यर्थः। हेत्वाभाससामान्यलक्षणघटकप्रतिबन्धकता चास्य न्यायबोधिन्यां द्रष्टव्या।

---

(१) सर्वेति। अत्र 'सर्वसपक्षव्यावृत्तत्वं साध्यवदवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, हेतौ साध्यवदवृत्तित्वे निश्चिते साध्यवद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्' इति ( मद्रासमु० पुस्तके ) पाठं कल्पयन्ति केचिदाधुनिका नैयायिकाः। स च साध्यवदवृत्तित्वरूपव्याप्तेः कुत्राप्यनुक्तत्वात्सामान्यादिक इत्यवधेयम्।

अनुपसंहारिणः किं लक्षणम् ?

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति ।**

---

न्यायबोधिनी ।

**अनुपसंहारिणं लक्षयति** अन्वयेति । उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । (सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः । )(१) किञ्चिद्विशेष्यकनिश्चयाविषयकसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषयकसाध्याभावकत्वमेवानुपसंहारित्वम् । एतदीयज्ञानस्य व्याप्तिसंशयजननद्वारा व्याप्तिज्ञानप्रतिबन्धः फलम् । (२)वस्तुतस्तु अत्यन्ताभावाप्रतियोगिसाध्यादिकमेवानुपसंहारित्वमिति बोध्यम् ।

पदकृत्यम् ।

**अन्वयेति** । केवलान्वयिन्यतिव्याप्तिवारणाय अन्वयेति । केवलव्यतिरेकिण्यतिव्याप्तिवारणाय व्यतिरेकेति । **अत्रेति** । उपदर्शितानुमान इत्यर्थः ।

विरला ।

अनुपसंहार्यनैकान्तिकमाह **अन्वयेति** । अन्वयव्याप्तौ व्यतिरेकव्याप्तौ च दृष्टान्तरहितो यो हेतुः सोऽनुपसंहार्यनैकान्तिकहेत्वाभास इत्यर्थः । उदाहरति **यथा सर्वमिति** । अत्र सर्वं पक्षः अनित्यत्वं साध्यम् प्रमेयत्वं हेतुः, न ह्यत्रान्वयव्यतिरेकव्याप्त्योः कश्चिद्दृष्टान्तः सम्भवति—पक्षातिरिक्तस्य दृष्टान्तत्वात् , नास्ति चात्र कश्चित् पक्षातिरिक्तः सर्वस्यैव पक्षत्वात् इति भावः ।

---

(१) ( ) एतच्चिह्नान्तर्वर्तिपाठो म० मु० पु० नास्ति ।

[२] प्राच्यमतेनानुपसंहारिलक्षणमभिधाय नव्यमतेन तदाह वस्तुतस्त्विति । अत्यन्ताभावाप्रतियोगित्वविशिष्टसाध्यादिकत्वमेवानुपसंहारित्वम् । एतज्ज्ञानस्य व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकतया दूषकत्वं बोध्यम् । एतन्मते यद्विषयकं ज्ञानं साक्षादनुमितौ तज्जनकज्ञाने वा प्रतिबन्धकं तस्यैव हेतुदोषतया सर्वत्र साध्यसन्देहस्य व्याप्तिनिश्चयजनकसहचारनिश्चये तदात्मकव्याप्तिनिश्चये वा विरोधित्वेपि तज्ज्ञानस्य परामर्शानुमित्योरप्रतिबन्धकतया नोक्तानुपसंहारित्वे हेत्वाभासत्वसम्भवः उक्तकारणद्वारा व्याप्तिनिश्चयविरोधित्वेपि तज्ज्ञानस्य हेत्वाभासत्वरूपसामान्यलक्षणानाक्रान्तत्वादिति प्राचीनमतेऽस्वरसो बोध्यः ।

विरुद्धस्य किं लक्षणम् ?—

साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा शब्दो नित्यः कृतकत्वात् घटवदिति। (अत्र) कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम्।

न्यायबोधिनी।

विरुद्धं लक्षयति—साध्याभावव्याप्त इति। साध्याभावव्याप्तिः—साध्याभावनिरूपितव्यतिरेकव्याप्तिः-साध्यव्यापकीभूताभावप्रतियोगित्वम्, तथाच पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः (१)फलम्। (२)एवं सत्प्रतिपक्षेऽपि। (३)विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन

पदकृत्यम्।

विरुद्धं लक्षयति–साध्येति। सद्धेतुवारणाय साध्याभावव्याप्त इति। सत्प्रतिपक्षवारणाय सत्प्रतिपक्षभिन्न इत्यपि बोध्यम्। कृतकत्वादिति। कार्यत्वादित्यर्थः। कृतकत्वमिति। अनित्यत्वेन व्याप्तमिति। यद्यत्कृतकं तत्तदनित्यमिति व्याप्तिर्भवत्येव तथेति भावः।

विरला।

एवं त्रिविधानैकान्तिकं निरूप्य विरुद्धं निरूपयति साध्याभावेति। विरुद्धः—साध्यविरोधवान्—साध्यविपरीतेन साध्याभावेन सह वर्तमान इति यावत्। अक्षरार्थस्तु–साध्यस्याभाव इति षष्ठ्यर्थः प्रतियोगित्वम्, तथा च साध्यप्रतियोगिकाभाव इत्यर्थः, व्याप्तः व्याप्तिविशिष्टः, साध्याभावेन व्याप्तः साध्याभावव्याप्तः, अत्र तृतीयार्थो निरूपितत्वम्, एवं च साध्याभावनिरूपितव्याप्तिविशिष्टो हेतुर्विरुद्धहेत्वाभास इत्यर्थः। उदाहरति यथा शब्द इति। यत्र यत्र कृतकत्वं तत्र तत्र न नित्यत्वं किन्तु नित्यत्वाभाव इति कृतकत्वं व्याप्यं नित्यत्वाभावो व्यापकस्तथा च कृतकत्व-

(१) फलमिति। तथाच नित्यत्वाभावव्याप्यकृतकत्ववान् शब्द इति विरुद्धज्ञानाच्छब्दो नित्य इत्यनुमितिर्न जायत इत्यर्थः।

(२) एवं–साध्याभावव्याप्यहेतुप्रकारकज्ञानात्पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः।

(३) एवं दूषकताबीजस्य तुल्यत्वेऽपि विरुद्धसत्प्रतिपक्षयोर्भेदमाह विरुद्धेति।

सत्प्रतिपक्षस्य किं लक्षणम् ?

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वाद्घटवत् ।**

---

न्यायबोधिनी ।

सत्प्रतिपक्षहेतोर्द्विविधत्वेन च ज्ञातव्यः । (१)साध्याभावव्याप्यप्रतिहेतुमत्पक्षस्सत्प्रतिपक्ष इति यावत् । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि(२) ॥

पदकृत्यम् ।

सत्प्रतिपक्षं लक्षयति—साध्येति । यस्य हेतोः साध्याभावसाधकं साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षो हेतुः विद्यते स हेतुः सत्प्रतिपक्ष इत्यर्थः । अयमेव प्रकरणसम इत्युच्यते । विरुद्धवारणाय हेत्वन्तरं यस्येति । वह्न्यादिवारणाय साध्याभावेति ।

विरला ।

रूपहेतोर्नित्यत्वरूपसाध्यप्रतियोगिकाभावनिरूपितव्याप्तिविशिष्टत्वादस्ति विरुद्धत्वमिति भावः ।

सत्प्रतिपक्षं निरूपयति साध्याभावेति । सन् विद्यमानः प्रतिपक्षः प्रकृतसाध्यस्याभावसाधनीभूतोऽन्यो हेतुर्यस्य स साध्याभावसाधकप्रतिहेतुक इत्यर्थः । उदाहरति यथेति । अत्र श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वरूपश्रावणत्वस्य हेतोर्यत्साध्यं नित्यत्वं तदभावोऽनित्यत्वं तत्साधककृतकत्वरूपहेत्वन्तरस्य सत्वाच्छ्रावणत्वं हेतुः सत्प्रतिपक्ष इत्यर्थः । एवं कार्यत्वमपीति । अस्य चानुमितिप्रतिबन्धः फलम् । यथा प्रकृत एव शब्दत्ववन्नित्यत्वव्याप्यश्रावणत्ववानयं शब्द इति परामर्शसत्वे नानित्यत्वानुमितिः घटवदनित्यत्वव्याप्यकृतकत्ववानयं शब्द इति वा परामर्शसत्वेऽपि न नित्यत्वानुमितिस्तुल्यबलतया परस्परप्रतिबन्धात् । अयं च सत्प्रतिपक्षो न्यायसूत्रादौ प्रकरणसमसंज्ञयोक्त इति तत्रैव द्रष्टव्यम् ।

---

(१) प्रसङ्गादत्रैव सत्प्रतिपक्षलक्षणमाह साध्याभावेति । शब्दो नित्यः श्रावणत्वाच्छब्दोऽनित्यः कृतत्वादित्यत्र नित्यत्वाभावव्याप्यकार्यत्वप्रतिहेतुमान् पक्षः शब्द इति लक्षणसमन्वयः । तद्वत्त्वं च एकज्ञानविषयत्वसम्बन्धेन श्रावणत्वेऽपीति स सत्प्रतिपक्षितः । एवं कार्यत्वेऽपि ।

(२) सूचनमपीति । विशेषो ज्ञातव्य इति पूर्वेणान्वयः ।

असिद्धः कतिविधः ?

असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति ।

आश्रयासिद्धः कः ?

आश्रयासिद्धो यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स नास्त्येव ।

स्वरूपासिद्धस्य किं रूपम् ?

स्वरूपासिद्धो यथा शब्दो गुणश्चाक्षुषत्वात् । अत्र चाक्षुषत्वं

---

न्यायबोधिनी ।

आश्रयासिद्ध इति । आश्रयासिद्धिर्नाम पक्षतावच्छेदकाविशिष्टपक्षाप्रसिद्धिः । यथेति । अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम्(१) ।

स्वरूपासिद्ध इति । स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । तथाच हेपदकृत्यम् ।

असिद्धं विभजते—असिद्ध इति । आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धत्वम् । आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्पक्षकत्वम् । भवति हि अरविन्दत्वे गगनयित्वरूपपक्षतावच्छेदकाभाववत्पक्षकत्वम्—अरविन्दरूपपक्षे गगनयित्वविरहात् । ननु कथमरविन्दे गगनीयत्वविरहोऽत आह—अत्रेति । उपदर्शितानुमान इत्यर्थः ।

पक्षे हेत्वभावः स्वरूपासिद्धिः । सद्धेत्वभावेऽतिव्याप्तिवारणाय पक्षे इति । घटाद्यभाववारणाय हेत्विति । सोऽयं स्वरूपासिद्धः शुद्धासिद्धभागासिद्धविशेषणासिद्धाविशेविरला ।

तत्र प्रथममाश्रयासिद्धमाहाश्रयासिद्ध इति । आश्रयः पक्षः असिद्धो यस्य हेतोः स आश्रयासिद्धः । उदाहरति गगनेति । अत्र गगनत्वविशिष्टारविन्दस्यालीकतयाऽऽश्रयासिद्धिरिति भावः ।

स्वरूपासिद्ध इति । स्वरूपं ( स्वधर्मः ) हेतुः, तच्च पक्षेऽसिद्धं यत्र हेतौ स

---

(१) फलमिति । तथा चारविन्दं गगनीयत्वाभाववत् इति आश्रयासिद्धिज्ञानात् गगनीयत्वविशिष्टमरविन्दं सुरभीत्यनुमितिप्रतिरोधो जायत इति भावः ।

**शब्दे नास्ति शब्दस्य श्रावणत्वात्।**

व्याप्यत्वासिद्धः कः किञ्चोपाधिस्वरूपम्?

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयो-**

न्यायबोधिनी।

त्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम् (१)।

व्याप्यत्वासिद्ध इति। (२)प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्। एवं वह्नेरव्यापक-

पदकृत्यम्।

व्यासिद्धभेदेन चतुर्विधः। तत्राद्यस्तूपदर्शित एव। द्वितीयो यथा—उद्भूतरूपादिचतुष्टयं गुणः रूपत्वादित्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन तस्य भागे स्वरूपासिद्धत्वम्। तृतीयो यथा—वायुः प्रत्यक्षः रूपवत्त्वे सति स्पर्शवत्त्वादित्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति, विशेषणाभावे विशिष्टस्याप्यभावात्। तुरीयो यथा—अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुः। तस्य स्वरूपासिद्धत्वं तु विशेष्याभावप्रयुक्तविशिष्टाभावादिति बोध्यम्।

व्याप्यत्वासिद्धं निरूपयति—**सोपाधिक इति**। ननु कोऽयमुपाधिरत आह—**साध्येति**। साधनाव्यापक उपाधिरित्युक्ते शब्दोऽनित्यः कृतकत्वादित्यत्र सामान्यवत्त्वे-

विरला।

**स्वरूपासिद्ध इत्यर्थः**। अत्र चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयस्वरूपचाक्षुषत्वहेतोः पक्षे शब्देऽसत्त्वात्स्वरूपासिद्धिः शब्दस्य श्रावणत्वादिति भावः।

व्याप्यत्वासिद्धमाह **सोपाधिक इति**। उपाधिविशिष्टो हेतुर्व्याप्यत्वासिद्ध इत्यर्थः। उपाधित्ववांश्चोपाधिः। उपाधित्वं किं तदाह **साध्यव्यापकत्वे सतीति**।

---

(१) फलमिति। चाक्षुषत्वाभाववाञ्छब्द इति स्वरूपासिद्धिज्ञानात् गुणत्वव्याप्यचाक्षुषत्ववान् शब्द इति परामर्शप्रतिबन्ध इत्यर्थः। (२) प्रकृते पर्वतो धूमवान् वह्निमत्त्वादित्यत्र।

ग उपाधिः । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता । एवं साध्यव्यापकत्वे सति साध-

न्यायबोधिनी ।

त्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतम् । तदेव(१) व्यभिचारितत्वम् । तथा चोपाधिव्यभिचारितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव(२) । अनुमानप्रकारश्च पूर्वानुमानहेतुं पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारितत्वात् घटत्वादिवत्, यो यत्साध्यव्यापकत्यम् ।

पदकृत्यम् ।

सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमप्युपाधिः स्यात्तदर्थं साध्यव्यापकत्वमुक्तम् । तावत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्तदर्थं साधनाव्यापकत्वम् । उपाधिभेदमादायासम्भववारणाय व्यापकत्वशरीरेऽप्यत्यन्तपदमादेयम् । साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकत्वशरीरेऽप्यत्यन्तपदमवश्यं देयम् । सोऽयमुपाधिस्त्रिविधः—केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्य उपदर्शितः । एव क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका हिंसात्वात् क्रतुबाह्यहिंसावदित्यत्र निषिद्धत्वमुपाधिः । तस्य यत्राधर्मजनकत्वं तत्र निषिद्धत्वमिति साध्यव्यापकता । यत्र हिंसात्वं तत्र न निषिद्धत्वमिति निषिद्धत्वमुपाधिः साधनाव्यापकः क्रतुहिंसायां निषिद्धत्वस्याभावात् । 'न हिंस्यात्सर्वा भूतानि' इति सामान्यवाक्यतः 'पशुना यजेत' इत्यादिविशेषवाक्यस्य बलीयस्त्वात् । अतो हिंसात्वं नाधर्मजनकत्वे

विरला ।

साध्यव्यापकतां निर्वक्ति **साध्यसमानाधिकरणेति** । साध्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वमित्यर्थः । साधनाव्यापकत्वमाह **साधनेति** । साधनाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वमित्यर्थः । उदाहरति पर्वत

(१) तदेव–अव्याप्यत्वमेव ।

(२) गृहीतमेवेति । यत्साधने यदुपाधिव्यभिचारो गृह्यते तत्साधने तदुपाधिव्याप्यव्यभिचारोऽपि गृह्यत एवेत्यर्थः ।

नाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ।

न्यायबोधिनी ।

पकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारीति रीत्या बोध्यः । एवं प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । (१)तथाच धूमाभाववदवृत्तित्वाभावरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

न च व्याप्यत्वासिद्धेः व्यभिचारादभेद इति वाच्यम् । धूमाभाववदवृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धत्वं, धूमाभाववदवृत्तित्वेन व्यभिचारत्वमिति भेदात् ।

पदकृत्यम् ।

प्रयोजकमपि तु निषिद्धत्वभेवेत्यादिकमपि द्रष्टव्यम् । द्वितीयो यथा—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वमुपाधिः । तस्य यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमिति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात्, किन्तु द्रव्यत्वरूपो यः पक्षधर्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वमिति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव । आत्मनि व्यभिचारवारणाय बहिःपदम् । यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र नोद्भूतरूपवत्त्वमिति साधनाव्यापकत्वं च वायावुद्भूतरूपविरहात् । तृतीयो यथा—

विरला ।

इति । अत्र पर्वतपक्षकधूमसाध्यकानुमाने वह्निमत्त्वं हेतुः सोपाधिकत्वात् व्याप्यत्वासिद्धः । उपाधिश्चात्रार्द्रेन्धनसंयोगः । तथाहि यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनसंयोग इति धूमरूपसाध्यव्यापकतार्द्रेन्धनसंयोगे वर्तत एव । यत्र २ वह्निस्तत्र २ आर्द्रेन्धनसंयोग इति तु वह्निआर्द्रेन्धनसंयोगयोर्व्याप्तिर्नास्ति अयःपिण्डे वह्निसत्त्वेऽपि आर्द्रेन्धनसंयोगाभावादिति वह्निरूपसाधनाव्यापकतापि उपाधौ वर्तत एवेति सोपाधिकोऽयं हेतुरित्यर्थः । उक्तोपाधिलक्षणसत्त्वेनार्द्रेन्धनसंयोगस्योपाधित्वं सम्प्रतिपन्नमित्याह **एवमिति** । उक्तोपाधिमत्त्वेन वह्निमत्त्वहेतोर्व्याप्यत्वासिद्धत्वं सुस्थिरमित्याह **सोपाधिकत्वादिति** ।

(१) तथा चेति । धूमाभाववदयःपिण्डावृत्तित्वाभाववान् वह्निरिति व्यभिचारज्ञानात् धूमाभाववदवृत्तित्वाभावरूपव्याप्तिज्ञानप्रतिबन्ध एव दूषकताबीजमित्यर्थः ।

बाधितस्य किं लक्षणम् ?

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम् ॥**

न्यायबोधिनी ।

यस्येति । यस्य हेतोः साध्याभावः साध्यबाधः प्रमाणान्तरेण प्रत्यक्षादिप्रमाणेन पक्षे निश्चितः स बाधित इत्यर्थः । तथाच प्रात्यक्षिकसाध्यबाधनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद्बाधित(१)हेतुरित्युच्यते ।

इति न्यायबोधिन्यामनुमानपरिच्छेदः ॥

पदकृत्यम् ।

ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वमुपाधिः । तस्य यत्र विनाशित्वं तत्र भावत्वमिति न केवलसाध्यव्यापकत्वम् प्रागभावे भावत्वविरहात्, किन्तु जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र तत्र भावत्वमिति साधनावच्छिन्नसाध्यव्यापकत्वमेव । यत्र जन्यत्वं तत्र न भावत्वमिति साधनाव्यापकत्वञ्च ध्वंसे भावत्वविरहात् । एवं स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वमुपाधिः । श्यामत्वस्य नीलघटेऽपि सत्त्वान्न केवलसाध्यव्यापकत्वम्, किन्तु साधनावच्छिन्नसाध्यव्यापकत्वमेव । अष्टमे पुत्रे शाकपाकजन्यत्वविरहेण साधनाव्यापकत्वं चेत्यादिकमपि द्रष्टव्यम् ।

**यस्येति** । सद्धेतुवारणाय प्रमाणान्तरेणेति । घटादिवारणाय साध्येति ।

इति पदकृत्येऽनुमानखण्डः ॥

विरला ।

बाधितं लक्षयति **यस्येति** । अत्र साध्यस्याभाव इति षष्ठ्यर्थः प्रतियोगित्वम्, तथा च साध्यप्रतियोगिकाभाव इत्यर्थः । स यस्य हेतोः प्रत्यक्षादिना निर्णीतस्स हेतुः बाधित इत्युक्त इति भावः । उदाहरति **यथेति** । अन्यत्स्पष्टम् । इत्यनुमानम् ॥

---

(१) हेतुरिति । तथा चोष्णो वह्निरिति बाधदोषस्यैकज्ञानाविषयत्वसम्बन्धेन द्रव्यत्वे सत्त्वाद्धेतुर्बाधित इत्यर्थः ।

उपमानलक्षणं किम्?

**उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। तथाहि—कश्चिद्गवयपदार्थमजानन्कुतश्चिदारण्यकपुरुषात्-गोसदृशो गवय-इति श्रुत्वा वनं गतो वाक्या-**

---

न्यायबोधिनी।

**उपमानं लक्षयति—**उपमितिकरणमिति। **उपमितिं लक्षयति—**संज्ञासंज्ञीति। **संज्ञा नाम पदम्, संज्ञी अर्थः, तयोः सम्बन्धः शक्तिः, तथाच पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः। उपमानं नामातिदेशवाक्यार्थज्ञानम्। अतिदेशवाक्यार्थस्मरणं व्यापारः। उपमितिः**

पदकृत्यम्।

अवसरसङ्गतिमभिप्रेत्यानुमानानन्तरमुपमानं निरूपयति—**उपमितीति**। उपमितेः करणमुपमानमित्यर्थः। कुठारादिवारणाय मितीति। प्रत्यक्षादिवारणाय उपेति। **संज्ञासंज्ञीति**। अनुमित्यादिवारणाय सम्बन्धेति। संयोगादिवारणाय संज्ञासंज्ञीति। **असौ गवयशब्दवाच्य इति**। अभिप्रेतो गवयो गवयपदवाच्य इत्यर्थः। तेन गवयान्तरे शक्तिग्रहाभावप्रसङ्ग इति दूषणमपास्तम्। तथाच गोसादृश्यविशिष्टपिण्डज्ञानं करणम्। अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः। उपमितिः फलमिति सारम्। तच्चोपमानं त्रिविधं—सादृश्यविशिष्टपिण्डज्ञानमसाधारणधर्मविशिष्टपिण्डज्ञानं वैधर्म्यविशिष्टपिण्डज्ञानं च। तत्राद्यमुक्तमेव। द्वितीयं यथा-खड्गमृगः कीदृगिति पृष्टे

विरला।

एवं प्रत्यक्षानुमाने निरूप्येदानीमुपमानं निरूपणीयमतस्तल्लक्षणमाचष्टे **उपमितीति**। उपमितेः करणमित्यत्र षष्ठ्यर्थो निरूपितत्वम्, तथाचोपमितिनिरूपितकरणत्वमुपमानस्य लक्षणमित्यर्थः। उपमानलक्षणघटकीभूतामुपमितिमाह **संज्ञेति** अत्रोपमितिर्लक्ष्याऽवशिष्टं लक्षणम्। तथाच अयं गवयपदवाच्य इत्याकारकज्ञानरूपोपमितौ गवयपदगवयरूपार्थयोर्वाच्यवाचकभावरूपसम्बन्धविषयकज्ञानत्वस्य सत्त्वाल्लक्ष्ये लक्षणसमन्वयः। इदमेव स्पष्टयति **तथाहीत्यादिना**। अयमत्र निर्गलितार्थः—क्वचित्कर्मणि गवयवस्योपयोगं ज्ञात्वा तं जिज्ञासमानेन ग्रामीणेन कीदृशो गवय इति पृष्टे, आरण्यकः समाचष्टे—यथा गौस्तथा गवय—इति, पश्चात् वनं गतस्य समीप

र्थं स्मरन्गोसदृशं पिण्डं पश्यति तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते ॥

---

न्यायबोधिनी ।

फलम् । (१)गोसदृशो गवयपदवाच्य इत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारेण यज्ज्ञानं जायते तदेव करणम् ॥

इति न्यायबोधिन्यामुपमानपरिच्छेदः ॥

पदकृत्यम् ।

नासिकालसदेकशृङ्गोऽनतिक्रान्तगजाकृतिश्चेति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशं पिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति तदनन्तरं खड्गमृगः खड्गपदवाच्य इत्युपमितिरुत्पद्यते । अत्र नासिकालसदेकशृङ्ग एवासाधारणधर्मः । तृतीयं यथा—उष्ट्रः कीदृगिति पृष्टे अश्वादिवन्न समानपृष्ठो न ह्रस्वग्रीवशरीरश्चेति आप्तोक्ते कालान्तरे तत्पिण्डज्ञानं ततोऽतिदेशवाक्यार्थस्मरणं तत उष्ट्र उष्ट्रपदवाच्य इत्युपमितिरुत्पद्यते ।

इति पदकृत्यके उपमानखण्डः ॥

विरला ।

गलकम्बलपिण्डं गोसदृशमनुभवतोऽतिदेशवाक्यार्थस्मरणाद्या गवयो गवयपदवाच्य इति प्रतीतिर्जायते सा न प्रत्यक्षस्य फलम्, अनाकर्णितातिदेशवाक्यस्यापि तत्प्रसङ्गात् । नापि वाक्यस्य, अननुभूतपिण्डस्यापि तत्प्रसङ्गात् । नापि गवयो गवयपदवाचको गोसदृशत्वात् यन्नैवं तन्नैवं यथा घट इति व्यतिरेकिणो, गवयपदं गवयवाचकमसति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् यथा गोपदं गोवाचकमिति अन्वयिनो वाऽनुमानस्य फलम्, गवयत्वज्ञानं विना तेन रूपेणानुमानसम्भवात्, तस्माद्यद्धर्मविशिष्टेऽतिदेशवाक्येन यत्पदवाच्यत्वं ज्ञायते तद्धर्मविशिष्टे तत्पदवाच्यताज्ञानमुपमितिः फलमिति । एतेन किमिति उपमानमतिरिक्तं प्रमाणं स्वीकर्तव्यं प्रत्यक्षादिष्वन्तर्भावसम्भवादिति शङ्कायाः समाधानं वेदितव्यम् । इत्युपमानम् ॥

---

(१) उपमितिकरणभूतं अतिदेशवाक्यार्थज्ञानमेव विवृणोति गोसदृश इत्यादिना । इदं तु प्राचीनमतम् । नव्यमते तु दृष्टे गवये गोसादृश्यप्रत्यक्षमेव करणमतिदेशवाक्यार्थस्मरणं व्यापारः गवयो गवयपदवाच्य इति ज्ञानमुपमितिरिति बोध्यम् । प्राचीनमते तूक्तसादृश्यविशिष्टपिण्डप्रत्यक्षं सहकारितयाऽङ्गीक्रियते तस्यैव करणत्वेन निर्वाहेऽयुक्तं तन्मतमिति नव्यानामभिप्रायः । अधिकं दिनकर्यादौ द्रष्टव्यम् ।

शब्दप्रमाणस्य किं स्वरूपम् ?

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः,**

न्यायबोधिनी—

शब्दं लक्षयति—**आप्तेति** । आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम् । ( प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम् )। वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत आप्तोच्चरितत्वनिवेशः । तावन्मात्रोक्तौ जबगडदशादावतिव्याप्तिरतो वाक्यत्वम् । ( आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः । (१)वस्तुतस्तु पदज्ञानं करणम् । वृत्तिज्ञानसहकृतपदज्ञान(२)जन्यपदार्थोपस्थितिर्व्यापारः । वाक्यार्थज्ञानं शाब्दबोधः फलम् । वृत्तिर्नाम पदशक्तत्वम् ।

अवसरसङ्गतिमभिप्रेत्योपमानानन्तरं शब्दं निरूपयति—**आप्तेति** । **शब्द इति** । शब्दप्रमाणमित्यर्थः । भ्रान्तविप्रलम्भकयोर्वाक्यस्य शब्दप्रमाणत्ववारणाय आप्तेति । ननु कोऽयमाप्त इत्यत आह—**आप्तस्त्विति** । यथार्थवक्ता यथाभूताबाधितार्थोपदेष्टा । वाक्यं लक्षयति—**वाक्यमिति** । घटादिसमूहवारणाय पदेति । **शा**०

विरला ।

प्रमाणचतुष्टयेष्ववशिष्टं प्रमाणं शब्दप्रमाणं निरूपयति **आप्तवाक्यमिति** । आप्तोच्चरितत्वे सति वाक्यत्वं शब्दप्रमाणलक्षणम् । विशेषणानुक्तौ अनाप्तोच्चारितवाक्येऽतिव्याप्तिः अतस्तदुपादानम् । विशेष्यानुक्तौ निरर्थकजबगडादावतिव्याप्तिरतो वाक्यत्वमिति । नन्विदं लक्षणमनुपपन्नम् , इष्टजनोच्चारितबाधितार्थकवाक्येऽतिव्याप्तेरत आह **आप्तस्त्विति** । ननु 'तिङ्सुबन्तचयो वाक्यम्' इत्यमरसिंहोक्तवाक्यलक्षणस्य 'घटस्त्वयाऽऽनेतव्यः' इति वाक्येऽसम्भवात्कथमिदं लक्षणं सम्भवतीत्यत्राह **वाक्यमिति** । तथाचामरोक्तं लक्षणमौत्सर्गिकमिति न दोषः ।

---

( १ ) पदसमूहात्मकस्य ज्ञानमानस्य शब्दस्य करणत्वे मौनिश्लोकादौ शाब्दबोधो न स्यात् तत्र शब्दोच्चारणाभावेन ज्ञायमानपदाभावादतो नवीनमतमाह वस्तुतस्त्विति । एतन्मते च लिप्या हस्तचेष्टया च सङ्केतितपदज्ञानाच्छाब्दबोधोपपत्तिरिति भावः ।

( २ ) पदज्ञानवतोऽपि प्रत्यक्षादिना पदार्थोपस्थितिकाले शाब्दबोधवारणाय पदज्ञानजन्येति । घटादिपदात् समवायसम्बन्धेनाकाशस्मरणे सत्याकाशस्यापि शाब्दबोधापत्तिवारणाय वृत्तिज्ञानसहकृतेति ।

यथा गामानयेति । शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः ।

न्यायबोधिनी ।

(१)शक्तिलक्षणान्यतररूपा । शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसङ्केतः । ईश्वरसङ्केतो नाम ईश्वरेच्छा, सैव शक्तिरित्यर्थः । शक्तिनिरूपकत्वमेव पदे शक्तत्वम् । विषयतासम्बन्धेन शक्त्याश्रयत्वमर्थे शक्यत्वम् । शक्यसम्बन्धो लक्षणा । सा द्विविधा—गौणी शुद्धा चेति । गौणी नाम सादृश्यविशिष्टे लक्षणा । यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा । शुद्धा त्रिविधा–जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा । (२)यथा गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः । लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा । यथा काकेभ्यो दधि रक्ष्य-

पदकृत्यम् ।

क्तमिति । निरूपकतासम्बन्धेन शक्तिविशिष्टमित्यर्थः । अस्मादिति । घटपदाद्घटरूपोऽर्थो बोद्धव्य इतीश्वरेच्छैव शक्तिरित्यर्थः । अर्थस्मृत्यनुकूलपदार्थसम्बन्धत्वं

विरला ।

वाक्यलक्षणघटकीभूतपदलक्षणमाह शक्तमिति । निरूपकतासम्बन्धेन शक्तिविशिष्टत्वं पदत्वमित्यर्थः । तत्र शक्तिरेव केत्यत आह अस्मादिति । शक्तिरेव पदपदार्थयोर्वाच्यवाचकभावापरपर्यायो मुख्यः सम्बन्धः । सा च पदार्थान्तरमिति मीमांसकाः । मानाभावान्न पदार्थान्तरमिति नैयायिकाः । आधुनिके नाम्न्यपि 'एकाद-

(१) शक्तीति । पदजन्यपदार्थोपस्थितावेव च शक्तिज्ञानस्योपयोगः पूर्वं शक्तिज्ञानाभावे शक्यसम्बन्धरूपलक्षणाग्रहस्याप्यसम्भवेन पदपदार्थसम्बन्धज्ञानाभावात्पदज्ञानेन शाब्दबोधप्रयोजकीभूतस्मरणोत्पादनासम्भवात्, अत एव शक्तिज्ञानस्य सहकारित्वमुक्तं न्यायबोधिनीकारेणेति बोध्यम् ।

(२) यथेति । अत्र लक्ष्यं तीरं, लक्ष्यता तीरे, लक्ष्यतावच्छेदकं तीरत्वं, तेन रूपेण मुख्यार्थं प्रवाहं विहाय तीरमात्रबोधप्रयोजकत्वाज्जहल्लक्षणात्वमियमेव साहित्यमते लक्षणलक्षणेत्युच्यते ।

वाक्यार्थज्ञाने के हेतवः?

**आकाङ्क्षा योग्यता संनिधिश्च वाक्यार्थज्ञाने हेतुः।**

**पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा।**

---

न्यायबोधिनी।

तामित्यत्र काकपदस्य दध्युपघातके लक्षणा, लक्ष्यतावच्छेदकं दध्युपघातकत्वम्, तेन रूपेण दध्युपघातकानां सर्वेषां काकबिडालकुक्कुटसारमेयादीनां शक्यलक्ष्याणां बोधात्। जहदजहल्लक्षणा वेदान्तिनां मते। सा च शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका। यथा तत्त्वमसीत्यत्र सर्वज्ञत्वकिंचिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात्।

आकाङ्क्षां लक्षयति—पदस्येति। अव्यवहितोत्तरत्वादिसम्बन्धेन

पदकृत्यम्।

तल्लक्षणम्। शक्तिरिव लक्षणापि पदवृत्तिः। अथ केयं लक्षणा? शक्यसम्बन्धो लक्षणा। सा च त्रिधा–जहत्–अजहत्– जहदजहद्भेदात्। वर्तते च गङ्गायां घोष इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धस्तीरे। लक्षणबीजं च तात्पर्यानुपपत्तिः। अत एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति। छत्रिणो यान्तीत्यादौ द्वितीया। सोऽयमश्व इत्यादौ तृतीया।

असम्भववारणाय पदान्तरव्यतिरेकप्रयुक्तेति। पुनरसम्भववारणाय पदान्तरेति।

विरला।

शेऽह्नि पिता नाम कुर्यात्' इतीश्वरच्छोऽस्त्यवे। नव्यास्त्वाधुनिकसङ्केतितडित्थादिपदे ईश्वरेच्छाया अभावादिच्छैव शक्तिरित्याहुः॥

शक्तिग्रहश्च वृद्धव्यवहाराद्भवति। यथोत्तमवृद्धेन 'घटमानयेति' वाक्ये प्रयुक्ते मध्यमवृद्धो घटमानयति, तदवलोक्य व्युत्पित्सुर्बालोऽन्वयव्यतिरेकाभ्यां घटमानयेति वाक्यजन्यत्वं मध्यमप्रवृत्तिजनकज्ञाने निश्चिनोति, ततो 'गामानय घटं नयेति' वाक्यान्तरं शृण्वतो आवापोद्वापाभ्यां घटपदस्य घटत्वविशिष्टे शक्तिः गोपदस्य गोत्वविशिष्टे शक्तिरिति गृह्यते। एवं व्याकरणादिभ्योऽपि शक्तिग्रहो भवति, तथा चोक्तम्—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।

वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ इति।

प्रसङ्गाच्छब्दप्रमाणेन शाब्दबोधे जननीये यानि कारणानि तान्युपपादयति आ-

अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं संनिधिः। तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम्—आकाङ्क्षाविरहात्। वह्निना सिञ्चतीति न प्रमा-

न्यायबोधिनी।

यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा। यथा घटमित्यादिस्थलेऽव्यवहितोत्तरत्वादिसम्बन्धेनाम्पदं घटपदवदित्याकारकाम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते। अम् घट इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायतेऽतस्तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्। अर्थाबाध इति। बाधाभावो योग्यतेत्यर्थः। अग्निना सिञ्चतीत्यत्र सेककरणत्वस्य जा-

पदकृत्यम्।

**अर्थेति**। आकाङ्क्षावारणाय अर्थेति। **पदानामिति**। असहोच्चारितेष्वतिव्याप्तिवारणाय अविलम्बेनेति। आकाङ्क्षावारणाय पदानामिति। आकाङ्क्षादिशून्यवाक्यस्यात्र प्रमाणत्वं निषेधयति—**तथा चेति**। आकाङ्क्षादिकं शब्दहेतुरित्युक्ते चेत्यर्थः। अनाकाङ्क्षाद्युदाहरणं दर्शयति—**यथेति**।

विरला।

**काङ्क्षेति**। वाक्यार्थज्ञाने वाक्यार्थविषयकज्ञाने शाब्दबोधे इति यावत्। नन्वनिच्छतोपि वाक्याच्छाब्दबोधोत्पत्त्या इच्छारूपाकाङ्क्षायाः शाब्दबोधहेतुत्वं न सम्भवत्यतस्तां निर्वक्ति **पदस्येति**। यत्पदस्य यत्पदव्यतिरेकप्रयुक्तं यत्पदाभावप्रयोज्यमन्वयाननुभावकत्वं शाब्दबोधाजनकत्वं तत्पदस्य तत्पदेन सहाकाङ्क्षेत्यर्थः। यथा गामानयेत्यादिवाक्यघटकीभूतगोपदस्याऽम्पदव्यतिरेकप्रयुक्तमन्वयाननुभावकत्वं वर्तते गो आनयेत्यत्र शाब्दबोधाभावात् अतो गोपदस्य अम्पदेन सहाकाङ्क्षा। नन्वश्राव्यवाक्यादपि शाब्दबोधोदयाच्छ्राव्यत्वरूपं योग्यत्वं न शाब्दबोधहेतुरतो योग्यतां निर्वक्ति **अर्थाबाध इति**। एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः। यथा वह्निना सिञ्चतीत्यत्र सेककरणत्वस्याग्नौ बाधान्न शाब्दबोध इति। ननु दूरवर्तिनोऽप्यर्थस्य शाब्दबोधोदयात्पदार्थानां वक्तृसामीप्यवृत्तित्वरूपं सान्निध्यं न शाब्दबोधहेतुरतस्तन्निर्वक्ति

णम्-योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्या-दिपदानि न प्रमाणम्-सांनिध्याभावात् ॥

वाक्यं कतिविधम् ?

वाक्यं द्विविधम्—वैदिकं लौकिकं च । वैदिकमीश्वरोक्तत्वा-त्सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् ।

शाब्दज्ञानं किम् ?

वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं तु शब्दः ॥

---

न्यायबोधिनी ।

लादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः(१)। सांनिधिं निरूपयति-पदानामिति। असहोच्चारितानि-विलम्बोच्चारितानि।

वैदिकमिति । वेदवाक्यमित्यर्थः इदमुपलक्षणम् । वेदमूलस्मृत्या-दीन्यपि ग्राह्याणि । लौकिकं त्विति । वेदवाक्यभिन्नमित्यर्थः । ( आप्तत्वं पदकृत्यम् ।

नन्वेतावता शाब्दसामग्री प्रपञ्चिता । प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितमित्यत आह—वाक्यार्थेति । शाब्दत्वं च शब्दात्प्रत्येमीत्यनुभ-वसिद्धा जातिः । शाब्दबोधक्रमो यथा—चैत्रो ग्रामं गच्छतीत्यत्र ग्रामकर्मकगमनानु-कूलवर्तमानकृतिमांश्चैत्र इति शाब्दबोधः । द्वितीयायाः कर्मत्वमर्थः । धातोर्गमनम् ।

विरला ।

पदानामिति । अविलम्बेनेत्यत्र तृतीयार्थो वैशिष्ट्यम् , पदानामिति षष्ठ्यर्थः कर्म-त्वम्, तथा च परस्परव्यवधानाभावविशिष्टं यत्पदकर्मकमुच्चारणं स सन्निधिरित्यर्थः । यथा प्रहरान्ते असहोच्चरितात् गामानयेत्यादिवाक्यात्सान्निध्याभावान्न शाब्दबोध इति ।

प्रसङ्गाद्वाक्यसामान्यं विभजते वाक्यमिति ।वैदिकमिति। वेदघटकमित्यर्थः । तद्भिन्नं लौकिकं बोध्यम् ।

शाब्दबोधस्वरूपमाह वाक्यार्थेति । एकपदार्थेऽपरपदार्थसंसर्गविषयकज्ञानमि-

---

( १ ) इदं तु प्राचीनमते, नव्यमते तु योग्यताज्ञानं न शाब्दबोधहेतुः अग्निना सिञ्चती-त्यादौ सेके वह्निकरणकत्वाभाववत्त्वायोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः तदभावनिश्चयस्य लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धमेवेति बोध्यम् ।

अयथार्थानुभवस्य कति भेदाः ?

**अयथार्थानुभवस्त्रिविधः—संशयविपर्ययतर्कभेदात् ।**

संशयस्य किं लक्षणम् ?

**एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति ।**

---

न्यायबोधिनी ।

**च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् )।**

इति न्यायबोधिन्यां शब्दपरिच्छेदः ॥

**यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते** संशयेत्यादिना ।

एकेति । **एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारज्ञानं संशय इत्यर्थः । भावद्वयकोटिकसंशयाप्रसिद्धेः स्थाणुर्वेत्यत्र स्थाणुत्वस्था णुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिक एव संशय इत्यर्थः ।**

पदकृत्यम् ।

अनुकूलत्वं च संसर्गमर्यादया भासते । लटो वर्तमानत्वमाख्यातस्य कृतिः । तत्सम्बन्धः संसर्गमर्यादया भासते । रथो गच्छतीत्यत्र गमनानुकूलव्यापारवान् रथ इति शाब्दबोधः । स्नात्वा गच्छतीत्यत्र गमनप्रागभावावच्छिन्नकालीनस्नानकर्ता गमनानुकूलवर्तमानकृतिमानिति शाब्दबोधः । क्त्वाप्रत्ययस्य कर्ता पूर्वकालीनत्वं चार्थः । एवमन्यत्रापि वाक्यार्थो बोध्यः ॥

इति पदकृत्ये शब्दपरिच्छेदः ॥

अयथार्थानुभवं विभजते—**अयथार्थेति** ।

संशयं लक्षयति—**एकस्मिन्निति** । एकस्मिन्धर्मिणि एकस्मिन्नेव पुरोवर्तिनि पदार्थे विरुद्धा व्यधिकरणा ये नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यं सम्ब-

विरला ।

त्यर्थः । तल्लक्षणं तु वृत्त्या पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् । शब्दप्रमाणमुपसंहरति **तत्करणं त्विति** ।

प्राग्लक्षितस्यायथार्थानुभवस्य विभागमाह **अयथार्थेति** ।

**विरुद्धेति** । विरुद्धाः—परस्परासमानाधिकरणाः ये धर्मास्तेषां यद्वैशिष्ट्यं—सम्बन्धः, तस्य ज्ञानम् ( विषयत्वं षष्ठ्यर्थः ), **तथा चैकधर्मिविशेष्यकविरुद्धनानाधर्मस-**

विपर्ययः कः ?

**मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ 'रजतम्' इति ।**

तर्कस्य किं स्वरूपम् ?

**व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति ॥**

---

न्यायबोधिनी ।

मिथ्याज्ञानमिति । **अयथार्थज्ञानमित्यर्थः । विपर्ययो नाम भ्रमः ।**

व्याप्यारोपेणेति । **तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम्, अन्यथा बाधनिश्चयाभाव इष्टापत्तिदोषेण तर्कानुत्पत्तेः ।**

पदकृत्यम् ।

न्धः तदवगाहि ज्ञानं संशय इत्यर्थः । घटपटाविति समूहालम्बनज्ञानस्य घटत्वपटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय एकस्मिन्निति । घटः पृथिवीति ज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गवारणाय विरुद्धेति । पटत्वविरुद्धघटत्ववान् पट इति ज्ञानेऽतिप्रसक्तिवारणाय नानेति ।

**मिथ्येति** । यथार्थज्ञानवारणाय मिथ्येति । अयथार्थवारणाय ज्ञानेति ।

तर्कं लक्षयति—**व्याप्यारोपेणेति** । असम्भववारणाय व्याप्यारोपेणेति । पु।

विरला ।

म्बन्धविषयकज्ञानत्वं संशयस्य लक्षणम् । लक्ष्यं दर्शयति **यथेति** । सोऽयं संशयः साधारणधर्मज्ञानजन्यः[१] असाधारणधर्मज्ञानजन्यः[२] विप्रतिपत्तिजन्यश्चेति[३] त्रिविधः । तत्राद्यः प्रदर्शित एव, तत्रोच्चैस्तरत्वं साधारणधर्मः । द्वितीयो यथा—शब्दत्वं नित्यानित्यव्यावृत्तं शब्दमात्रवृत्तीति ज्ञाने शब्दो नित्यो न वेति संशयः । तृतीयो यथा प्रामाण्यं स्वतो ग्राह्यं परतो ग्राह्यं वेति संशयः इति ।

विपर्ययं लक्षयति **मिथ्येति** । मिथ्या—तदभाववति तत्प्रकारकम्, ज्ञानं—तर्कान्यनिश्चयः, तथाच तदभाववति तत्प्रकारकतर्कान्यनिश्चयत्वम् विपर्ययस्य लक्षणम् ।

**तर्कमाह व्याप्येति** । आरोपः—आहार्यज्ञानं, तच्च—बाधकालीनेच्छाजन्यं ज्ञानम् । आरोपेणेत्यत्र जन्यत्वं तृतीयार्थः, तथा च व्याप्यविषयकाहार्यज्ञानजन्यव्यापकविषयकाहार्यज्ञानत्वं तर्कस्य लक्षणं बोध्यम् । उदाहरति **यथेति** । अत्र प्रश्नः—यद्यपि

स्मृतिः कतिविधा ?

स्मृतिरपि द्विविधा—यथार्था अयथार्था च । प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था ॥

सुखस्य किं लक्षणम् ?

सर्वेषामनुकूलवेदनीयं सुखम् ।

न्यायबोधिनी ।

सुखं निरूपयति—सर्वेषामिति । इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः । यथाश्रुते घटोऽनुकूल इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानाविशेष्यत्वस्य घटादावपि सत्त्वाद्धनादावतिव्याप्तिरिति । सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय इतरेच्छानधीनेतीच्छाविशेषणम् । सुखेच्छा तु सुखत्वप्रकारकज्ञानमात्रजन्यैव(१) ।

पदकृत्यम् ।

रसम्भववारणाय व्यापकारोप इति । अत्र वह्न्यभावो व्याप्यः धूमाभावो व्यापकः । यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः, तथापि प्रमाणानुग्राहकत्वात् स उदित इति बोध्यम् । स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः संधौ इडानाड्यां वा मनसि स्थितेऽदृष्टविशेषेण धातुदोषेण वा जन्यते । स च मानसविपर्ययान्तर्भूतः ॥

सुखं निरूपयति—सर्वेषामिति । सर्वात्मनामनुकूलमिति वेद्यं यत्तत्सुखमित्यर्थः । अहं सुखीत्यनुभवसिद्धसुखत्वजातिमत्, धर्ममात्रासाधारणकारणो गुणो वा सुखम् । शत्रुदुःखवारणाय सर्वेषामिति ।

विरला ।

तर्कोऽपि विपर्ययस्वरूपत्वान्न विभागार्ह इति । उत्तरम्—तथापि प्रमाणानुग्राहकत्वात्स पृथग् विभक्त इति ।

प्राग्लक्षितां स्मृतिं विभजते स्मृतिरपीति । स्वजन्यसंस्कारसम्बन्धेन प्रमायाः स्मृतिहेतुत्वमिति भावः ।

एतावता प्रबन्धेन सप्रपञ्चां बुद्धिं निरूप्य सुखं निरूपयति सर्वेषामिति । इष्टसाधनताज्ञानानधीनेच्छाविषयत्वं सुखस्य लक्षणमित्यर्थः । इदमेव सुखं वैषयिकमानोरथिकआभ्यासिकआभिमानिकभेदाच्चतुर्विधम् । विषयसंयोगजमाद्यम् । विषय-

(१) तथा च सुखेच्छेतरेच्छानधीनैवेति तद्विषयत्वस्य सुखे सत्त्वाल्लक्षणसमन्वयः ।

दुःखस्य किं लक्षणम् ?

**प्रतिकूलवेदनीयं दुःखम् ॥**

इच्छाद्वेषप्रयत्नानां कानि लक्षणानि ?

**इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः ॥**

---

न्यायबोधिनी ।

**दुःखं निरूपयति—**प्रतिकूलेति । अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम् । द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम्, सर्पजन्यदुःखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाजन्यद्वेषाविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः । फलेच्छा(१)उपायेच्छां प्रति कारणम्, अतः

पदकृत्यम् ।

**प्रतिकूलेति ।** दुःखत्वजातिमत्, अधर्ममात्रासाधारणकारणो गुणो वा दुःखम् । पदकृत्यं पूर्ववत् ।

इच्छां निरूपयति-**इच्छेति ।** काम इति पर्यायः । इच्छात्वजातिमती इच्छा । सा द्विविधा-फलेच्छा उपायेच्छा च । फलं सुखादिकम् । उपायो यागादिः । द्वेषं निरूपयति—**क्रोध इति ।** द्वेष्मीत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः । प्रयत्नं निरूपयति -**कृतिरिति ।** प्रयत्नत्वजातिमान्प्रयत्नः । स त्रिविधः-

विरला ।

ध्यानजं मानोरथिकम् । आसनाद्यभ्यासजं शरीरलाघवादिकृतं तृतीयम् । धनगर्वादिजं चतुर्थम् ।

दुःखं लक्षयति **प्रतिकूलेति ।** अनिष्टसाधनताज्ञानानधीनद्वेषविषयत्वं द्वेषस्य लक्षणमित्यर्थः । इदमपि सुखमिव चतुर्विधं बोध्यम् ।

प्रवृत्तिसाक्षादनुकूलत्वमिच्छायाः लक्षणं बोध्यम् । सा च द्विविधा—नित्याऽनित्या च । आद्या ईश्वरस्य अन्त्याऽस्माकम् । काममत्सरस्पृहातृष्णालोभमायादम्भा एतस्या

---

(१) सर्पजदुःखे द्वेषात्सर्पे द्वेष इत्यत्र युक्तिं दृष्टान्तेनाह फलेच्छेति । यथा तृप्तीच्छया भोजनेच्छा जायतेऽन इतरेच्छानधीनेच्छाविषयत्वं भोजने न, तथा सर्पजदुःखरूपे । फले द्वेषादुपाये सर्पे द्वेषोऽत इतरद्वेषानधीनद्वेषाविषयत्वं सर्पे नास्तीति भावः ।

धर्मस्य अधर्मस्य च किं लक्षणम्?

**विहितकर्मजन्यो धर्मः। निषिद्धकर्मजन्यस्त्वधर्मः॥**

न्यायबोधिनी।

**फलेच्छावशादुपायेच्छा भवति। एवं फले द्वेषादुपाये द्वेषः।**

**धर्माधर्मौ निरूपयति**—विहितेति। **वेदविहितेत्यर्थः॥** निषिद्धेति। **वेदनिषिद्धेत्यर्थः॥**

पदकृत्यम्।

प्रवृत्तिनिवृत्तिजीवनयोनिभेदात्। इच्छाजन्यो गुणः प्रवृत्तिः। द्वेषजन्यो गुणो निवृत्तिः। जीवनादृष्टजन्यो गुणो जीवनयोनिः। स च प्राणसञ्चारकारणम्।

धर्ममाह—**विहितेति**। वेदविहितेत्यर्थः। अधर्मवारणाय वेदविहितेति। यागादिक्रियावारणाय कर्मजन्य इति। स च कर्मनाशाजलस्पर्शकीर्तनभोगतत्त्वज्ञानादिना नश्यति। अधर्मलक्षणमाह-**निषिद्धेति**। वेदेनेत्यर्थः। धर्मवारणाय वेदनिषिद्धेति।

विरला।

एव भेदा इत्युक्तं **न्यायभाष्ये**। तत्र रतीच्छा कामः[१] प्रयोजनाद्विना पराभिमतवारणेच्छा मत्सरः[२] धर्माविरोधेन प्राप्तीच्छा स्पृहा[३] इदं मे न क्षीयतामितीच्छा तृष्णा[४] धर्मविरोधेन परद्रव्येच्छा लोभः[५] पापाद्रक्षणेच्छा माया[६] कपटेन धार्मिक इति स्वोत्कर्षख्यापनेच्छा दम्भः[७] इति। निवृत्तिसाक्षादनुकूलत्वं द्वेषस्य लक्षणम्। ज्ञानवारणाय साक्षादिति। क्रोधेर्ष्याऽसूयाद्रोहामर्षाभिमाना अस्यावान्तरभेदा उक्तास्तत्रैव। तत्र[१] क्रोधः—शरीरेन्द्रियाधिष्ठानवैकृत्यहेतुर्ज्वलनात्मकः। [२]ईर्ष्या—साधारणवस्तुग्रहीतरि द्वेषः। [३]असूया परगुणासहनम्। [४]द्रोहः—नाशाय द्वेषः। [५]अमर्षः—उपकारासहिष्णुता। [६]अभिमानः—असमर्थस्यात्मनि द्वेष इति। कृतित्वजातिमत्त्वं प्रयत्नसामान्यलक्षणम्। चिकीर्षा कृतिसाध्यत्वेष्टसाधनत्वमती उपादानप्रत्यक्षं चेति चतुष्टयं प्रवृत्तिजनकम्। मत्कृत्या साधयामीतीच्छां विना प्रवृत्तेरदर्शनाच्चिकीर्षा प्रवृत्तिहेतुः। कृत्यसाध्ये चन्द्रस्पर्शे प्रवृत्त्यभावात्कृतिसाध्यताज्ञानमपि प्रवृत्तिकारणम्। कृतिसाध्यत्वज्ञानेऽपि विषभक्षणादौ प्रवृत्त्यभावादिष्टसाधनताज्ञानमपि प्रवृत्तिकारणम्, तदुभयसत्त्वेऽपि परोक्षे प्रवृत्त्यदर्शनात् उपादानप्रत्यक्षं चेति बोध्यम्।

**विहितेति**। इष्टसाधनत्वेन वेदविहित इत्यर्थः। साक्षात्सुखसाधनत्वं धर्मत्वमित्यर्थः, तेन ज्योतिष्टोमादौ नातिप्रसङ्गः। **निषिद्धेति**। अनिष्टसाधनत्वेन वेदबो-

आत्ममात्रविशेषगुणाः के ?

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य, अनित्या जीवस्य ॥

संस्कारः कतिविधः, तद्भेदाश्च किं स्वरूपाः ?

संस्कारस्त्रिविधः—वेगो भावना स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृतिहेतुर्भावना,

न्यायबोधिनी।

बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा इत्यर्थः ।

संस्कारं विभजते—संस्कार इति । भावनां लक्षयति—अनुभवेति । अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽति-व्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं

पदकृत्यम् ।

वेदनिषिद्धक्रियावारणाय कर्मजन्य इति । स च भोगप्रायश्चित्तादिना नश्यति । एता-वेव अदृष्टमिति कथ्येते वासनाजन्यौ च । वासना च विलक्षणसंस्कारः ।

संस्कारं विभजते-संस्कारेति । सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्य-जातिमान्संस्कारः । घटादिवारणाय गुणत्वव्याप्येति । संयोगादिवारणाय आत्मविशे-षगुणोभयवृत्तीति । ज्ञानादिवारणाय सामान्येति । द्वितीयादिपतनासमवायिकारणं वे-गः । रूपादिवारणाय द्वितीयादिपतनेति । कालादिवारणाय असमवायीति । भावनां लक्षयति अनुभवेति । आत्मादिवारणाय प्रथमदलम् । अनुभवध्वंसवारणाय द्वितीय-

विरला ।

धित इत्यर्थः। साक्षाद्दुःखसाधनत्वमधर्मत्वमित्यर्थः, तेन निषिद्धकर्मणि नातिप्रसङ्गः । एतावेवादृष्टमित्युच्येते वासनाजन्यौ च । अत्र प्रश्नः—ईदृग्धर्माधर्मसत्त्वे किं प्रमाण-मिति । उत्तरम्—चैत्रशरीरादिकं तदीयविशेषगुणजन्यं कार्यत्वे सति तदुपभोगहे-तुत्वात् चैत्रप्रयत्नजन्यकुसुमपर्यङ्कादिवदित्यनुमानमित्यवेहि ।

संस्कार इति । संस्कारव्यवहारकारणीभूतज्ञानविषयत्वम्, आत्मविशेषगुणवृत्ति-मूर्तवृत्तिगुणत्वव्याप्यजातिमत्त्वं वा संस्कारस्य लक्षणं बोध्यम् । वेगं लक्षयति वेग इति । क्रियाजन्यत्वे सति क्रियाजनकत्वं वेगस्य लक्षणम् । पृथिव्यादौ इत्यादिकं

आत्ममात्रवृत्तिः । अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्था-

न्यायबोधिनी ।

प्रत्यपि कारणत्वादतस्तदुपादानम्, आत्ममनःसंयोगस्यानुभवज- न्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः— ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्य- त्वात्, अतः स्मृतिहेतुत्वोपादानम्, अनुभवध्वंसे स्मृतिहेतुत्वाभा- वान्नातिव्याप्तिः । (१)ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कार- णता सकलतान्त्रिकमतसिद्धा, यथा दण्डविशिष्टबुद्धिं प्रति दण्ड- ज्ञानं कारणम् । दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकबुद्धिः, तथाच द- ण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापति- तम्, दण्डप्रकारकबुद्धिः दण्डी पुरुष इत्याकारकबुद्धिस्तत्र दण्डज्ञानं कारणम्, नहि दण्डमजानानः पुमान् 'दण्डी पुरुषः' इति प्रत्येति, एवं च यत्राऽयं दण्ड इति प्रत्यक्षं जातं तदन- न्तरं दण्डी पुरुष इत्याकारकप्रत्यक्षमुत्पन्नं तत्र दण्डी पुरुष इत्या- कारकप्रत्यक्षेऽतिव्याप्तिः, तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञाना- पदकृत्यम् ।

दलम् । स्थितिस्थापकमाह-**अन्यथेति** । पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजाति- मत्त्वं स्थितिस्थापकत्वम् । गन्धत्वमादाय गन्धेऽतिव्याप्तिवारणाय संस्कारत्वव्याप्येति । भावनात्वमादाय भावनावारणाय पृथिवीसमवेतेति । स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय जातीति ।

विरला ।

स्वाश्रयकथनम्, तेन व्यापकेषु वेगो नास्तीत्यवगम्यते । केचित्तु मनोवृत्तित्वमेव लक्षणं मन्यन्ते, तच्च समवायेन बोध्यम्, अन्यथा घटादावपि मनोनिरूपितदैशिकसम्बन्धा- वच्छिन्नवृत्तित्वस्य सत्त्वादतिव्याप्तिः स्यात् । अत्र संस्कारत्वे सतीत्यपि विशेषणं देयम्, अन्यथा मनःसमवेतसंख्यादावतिव्याप्तिः स्यादित्यवधेयम् । भावनामाहानुभवज- न्येति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वस्य भावनायां सत्त्वाल्लक्ष्ये लक्षणसमन्वयः । पदव्यावृत्तिर्न्यायबोधिन्यादौ द्रष्टव्या ।

---

(१) उक्तविधभावनालक्षणस्य प्रत्यक्षेऽतिव्याप्तिं प्रदर्शयति नन्विति ।

न्यायबोधिनी ।

त्मकानुभवजन्यं, जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणे कारणं च-स्मृतिं प्रत्यनुभवस्य कारणत्वात्तथा चानुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावनालक्षणस्य यथोक्त-दण्डी पुरुष-इत्याकारकानुभवे विद्यमानत्वादतिव्याप्तिरि ति चेत् । (१)अत्र ब्रूमः-अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम् । तत्र कारणतायामनुभवत्वावच्छिन्नत्वं निवेश्यते, तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमिति फलितम्, अतो नोक्तातिव्याप्तिः, तथा हि-दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठा या कारणता तस्या न दण्डानुभवत्वमवच्छेदकं दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः, अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात्, तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः । भावनायां तु लक्षणमिदं वर्तते, तथाहि—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम्, अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावनायां वर्तते इति नासम्भवः । (२)नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्, तद्ध्यनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम्, नहि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते, तथाहि-ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च

(१) अनुभवजन्येत्यत्रानुभवमात्रजन्यत्वनिवेशे दण्डप्रकारकप्रत्यक्षबुद्धेर्दण्डानुभवादिव दण्डस्मरणादप्युत्पत्त्याऽनुभवमात्रजन्यत्वाभावान्नातिव्याप्तिरित्यभिप्रायेण समाधत्ते अत्र ब्रूम इति ।

(२) ननु पूर्वोक्तातिव्याप्तिवारणाय अनुभवमात्रजन्येति विशेषणपदस्यार्थकरणे विशेष्यपदं व्यर्थं स्यात्, तद्व्यावर्त्येऽनुभवध्वंसे अनुभवस्य प्रतियोगित्वेन जनकत्वादित्यभिप्रायेणाशङ्कते नन्वेवमिति ।

पकः, कटादिपृथिवीवृत्तिः ॥

इति गुणाः ॥

न्यायबोधिनी।

तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः, तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवातिव्याप्तिवारणसम्भवात्कृतं स्मृतिहेतुत्वविशेषणेनेति चेत्। (१)न, स्मृतावतिव्याप्तिवारणायैव तदुपादानात्, यथाहि—स्मृतिं प्रत्यनुभव एव कारणं न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन, तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वमवच्छेदकम्, तेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय स्मृतिहेतुत्वमुक्तम्, नहि स्मृतिः स्मृतिहेतुः, अतो न तत्रातिव्याप्तिरित्यलं (२)पल्लवतल्लजकल्पानल्पजल्पनेन।

पदकृत्यम्।

इति गुणा इति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम्। सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् ॥

इति गुणाः।

विरला।

इति गुणा इति। एतेषु रूपरसगन्धस्पर्शसांसिद्धिकद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाः विशेषगुणाः। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्वस्थितिस्थापकवेगाः सामान्यगुणाः। रूपादिचतुष्टयं परत्वापरत्वस्नेहवेगाः मूर्तगुणाः। शब्दादिदश भावना चेत्यमूर्तगुणाः। संख्या-

(१) उक्तरीत्याऽनुभवध्वंसेऽतिव्याप्त्यसम्भवेऽपि अनुभवमात्रजन्यायां स्मृतावतिव्याप्तिवारणाय विशेष्यपदस्य व्यावृत्तिं दर्शयन् समाधत्ते नेति।

(२) पल्लवतल्लजः प्रशस्तपल्लवस्तत्तुल्यबहुभाषणेनालमित्यर्थः।

## [४] कर्मादिलक्षणप्रकरणम् ।

कर्मणः किं लक्षणम् ?

**चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरस्य सन्निकृष्टसंयोगहेतुराकुञ्चनम् । विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ॥**

---

पदकृत्यम् ।

**चलनेति** । संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म । हस्तपुस्तकसंयोगवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् । **ऊर्ध्वेति** । अपक्षेपणवारणाय ऊर्ध्वेति । कालादिवारणाय असाधारणेत्यपि बोध्यम् । **अधोदेशेति** । उत्क्षेपणवारणाय अधोदेशेति । कालादिवारणाय असाधारणेत्यपि देयम् । **शरीरेति** । प्रसारणादिवारणाय संनिकृष्टेति । कालादिवारणाय असाधारणपदमप्यावश्यकम् ॥

विरला ।

[दि]पञ्चोभयगुणाः । एकत्वभिन्नसंख्या–एकपृथक्त्वभिन्नपृथक्त्वसंयोगविभागा **अनेकवृत्तिगुणाः** । एतद्भिन्नास्त्वेकैकवृत्तयो **गुणाः** । रूपादिचतुष्टयं शब्दश्च **बाह्यैकेन्द्रियग्राह्याः** । सङ्ख्यादिसप्तकं द्रवत्वस्नेहवेगाश्च **द्वीन्द्रियग्राह्याः** । बुद्ध्यादिषट्कमन्तरिन्द्रियग्राह्या **गुणाः** । गुरुत्वधर्माधर्मस्थितिस्थापकभावना **अतीन्द्रियगुणाः** । आपकजरूपादिचतुष्टयमध्यमपरिमाणैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहवेगस्थितिस्थापकाः **कारणगुणपूर्वकाः** । जन्यद्रव्यावृत्तिविशेषगुणा **अकारणगुणपूर्वकाः** । संयोगविभागवेगाः **कर्मासमवायिकारणकाः** । संयोगविभागौ शब्दात्मविशेषगुणाश्च **अव्याप्यवृत्तयः** । बुद्धीच्छाप्रयत्नद्वेषभावनाः **सविषयाः** । गन्धसंयोगादिचतुष्टयशब्दसुखदुःखद्वेषधर्माधर्मसंस्कारा **अनित्यगुणाः** । तदितरगुणाश्च **नित्या** इति बोध्यम् ॥

गुणान्निरूप्य कर्मणां स्वरूपमाह **चलनात्मकमिति** । संयोगविभागानुकूलमित्यर्थः । **ऊर्ध्वदेशेति** । क्रियया विभागः ततः पूर्वदेशसंयोगनाशः तत उत्तरदेशसंयोगोत्पत्तिरिति क्रमः । स चोत्तरदेशसंयोगः यद्यूर्ध्वदेशसंयोगः स्यात् तदा तादृशसंयोगजनकीभूतमुत्क्षेपणमित्युच्यते । एवमुत्तरत्रापि बोध्यम् ॥

सामान्यस्य किं लक्षणम्?

**नित्यमेकमनेकानुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। परं सत्ता, अपरं द्रव्यत्वादि॥**

---

न्यायबोधिनी।

**सामान्यं निरूपयति—**नित्यमेकमिति। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। नित्यविशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय नित्यत्वविशेषणम्। अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिस्तद्वारणायानेकसमवेतत्वम्। अनेकसमवेतत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः—जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात् समवेतत्वाच्च, अतः अनेकेति समवेतविशेषणम्(१)।

पदकृत्यम्।

**नित्यमिति**। संयोगादिवारणाय नित्यमिति। कालादिपरिमाणवारणाय अनेकेति। अनेकानुगतत्वं च समवायेन बोध्यम्, तेन नात्यन्ताभावेऽतिव्याप्तिः॥

विरला।

सामान्यं लक्षयति **नित्यमिति।** नित्यत्वं—ध्वंसाप्रतियोगित्वम्। अनेकानुगतत्वम्—अनेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वम्। तथा च नित्यत्वे सत्यनेकसमवेतत्वं जातिलक्षणं पर्यवसन्नम्। पदव्यावृत्तिर्न्यायबोधिन्यादौ द्रष्टव्या। पूर्वविभक्तपरापरजात्योः स्वरूपमाह परं सत्तेति।

अत्र **पूर्वपक्षः**—ननु सामान्याङ्गीकारे किं प्रमाणमिति चेत्। **समाधानम्**—न, अनुगतबुद्धिः अनुगतनिमित्तसाध्या अबाधितानुगतमतित्वात् दामकुसुमबुद्धिवदित्यनुमानमेवेति वदन्ति। वयन्तु तादृशबुद्धेरनुगतधर्मप्रकारकप्रत्यक्षेणैव जातिसिद्धौ नानुमानं किन्तु प्रत्यक्षमेव प्रमाणमिति ब्रूमः॥

---

(१) नन्वेतल्लक्षणं नित्यसंयोगेऽतिव्याप्तमिति चेन्न। नित्यसंयोगानङ्गीकारात् 'अजः संयोगो नास्ती'ति प्रशस्तपादभाष्यात्।

विशेषाणां किं लक्षणम् ?

## नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥

न्यायबोधिनी ।

नित्यद्रव्यवृत्तय इति । नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः, अत एव व्यावर्तकाः—इतरभेदानुमितिहेतवः (१)नित्यद्रव्यवृत्तित्व-रूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः । नित्यद्रव्य-निष्ठविशेष्यतानिरूपितैकम ात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रका-रताश्रयत्वं विशेषाणां लक्षणमिति भावः । पार्थिवपरमाणौ जलादि-भेदानुमापकगन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं भेदविशेषणम् । घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपिता-न्तं प्रकारताविशेषणम् । (२)एतेन 'व्यावर्तका' इत्यस्य नित्यद्रव्यवि-शेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफ-ल्येऽपि नित्यद्रव्यवृत्तय इति विफलमेव स्वरूपाख्यानस्यापि कृत-त्वादिति प्रत्युक्तम् ।

पदकृत्यम् ।

नित्यद्रव्यवृत्तय इति । घटत्वादिवारणाय नित्यद्रव्यवृत्तय इति । आत्मत्व-मनस्त्ववारणाय आत्मत्वमनस्त्वभिन्ना इत्यपि बोध्यम् ॥

विरला ।

विशेषाणां स्वरूपमाह नित्येति । व्यावर्तकाः—आश्रयाणां परस्परं भेदानुमिति-जनकाः । तथा चायं परमाणुरस्मात् परमाणोर्भिन्नः एतद्विशेषादित्यनुमानहेतवो विशे-

(१) नित्यद्रव्येति । नित्यद्रव्यवृत्तित्वरूपा या पक्षधर्मता पक्षवृत्तिता तत्प्रयोज्या या इतर-भेदानुमितिः—परमाणुः परमाण्वन्तराद्भिन्नः विशेषादित्यनुमितिः तदनुमापकत्वं विशेषाणां हेतुभूतानां-मित्यर्थः । अस्यैवार्थं स्वयं विवृणोति नित्यद्रव्यनिष्ठेति । नित्यद्रव्यपरमाण्वादिनिष्ठा या विशेष्यता तन्निरूपिता या एकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारता तदाश्रयत्वमित्यर्थः । अयं परमा-णुरेतत्पराणुभिन्नः विशेषात् इत्यत्रानुमितौ एतत्परमाणुरूपनित्यद्रव्यनिष्ठविशेष्यतानिरूपितैतत्पर-माणुमात्रवृत्तिइतरपरमाणुनिरूपितभेदानुमितिजनकतावच्छेदिका या प्रकारता तदाश्रयत्वस्य विशेषे सत्त्वाल्लक्षणसमन्वयः । एतत्पदकृत्यं न्यायबोधिन्यां द्रष्टव्यम् ।

(२) एतेनेति । पदद्वयमादायैतादृशार्थकरणेन । इति प्रयुक्तमिति । व्यावर्तकपदमात्रस्योक्ता-र्थकत्वे लाक्षणिकत्वापत्तेरिति भावः ।

समवायस्य किं लक्षणम् ?

**नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्य एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ॥**

---

न्यायबोधिनी ।

**समवायं निरूपयति**—नित्येति । **सम्बन्धत्वं (१)विशिष्टप्रतीतिनियामकत्वम् । तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम्** । ययोर्द्वयोर्मध्य इति । **(२)यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः ।**

पदकृत्यम् ।

**नित्येति** । आकाशादिवारणाय सम्बन्ध इति । संयोगवारणाय नित्येति । स्वरूपसम्बन्धवारणाय तद्भिन्न इत्यपि बोध्यम् ॥

विरला ।

-षा इत्यभिप्रायः ।

एतेन विशेषु किं मानमित्याशङ्का परस्ता । लक्षणं तु—सामान्यभिन्नत्वे सति जातिशून्यत्वे सति समवेतत्वं स्वतो व्यावृत्तत्वं वा बोध्यम् ॥

**नित्येति । अयुतसिद्धेति** । अयुतसिद्धयोर्वृत्तिर्यस्य सोऽयुतसिद्धवृत्तिः । निरूपितत्वं सप्तम्यर्थः, तथा चायुतसिद्धनिरूपितवृत्तित्वाश्रय इत्यर्थः । कावयुतसिद्धावत आह **ययोरिति । अविनश्यदिति** । विनाशपर्यन्तमित्यर्थः । एकं–घटाद्यवयव्यादि । अपरं कपालाद्यवयवादि । **आश्रितमेवेति** । अवयव्यादि परित्यज्यावयवादयो न तिष्ठन्ति इत्येतौ–अयुतसिद्धौ । भूतलादि त्यक्त्वा घटादिं तिष्ठतीति नायुतसिद्धौ भूतलघटाविति भावः । उदाहरति **यथेति** । अत्र **प्रश्नः**—समवायस्वीकारे किं प्रमाणमिति । **उत्तरम्**—नीलो घट इति विशिष्टबुद्धिर्विशेषणविशेष्य-

---

(१) विशिष्टप्रतीतिनियामकत्वं सांसर्गिकविषयतावत्त्वमित्यर्थः ।

(२) यन्निष्ठेति । अवयाविनिष्ठकालनिरूपिताधेयता अवयव्यवच्छिन्ना तदुभयान्यतरत्वम् अवयवेऽवयविनि चेत्यर्थः ।

प्रागभावस्य किं लक्षणम्?

**अनादिः सान्तः प्रागभावः, उत्पत्तेः पूर्वं कार्यस्य।**

प्रध्वंसस्य किं लक्षणम्?

**सादिरनन्तः प्रध्वंसः, उत्पत्त्यनन्तरं कार्यस्य।**

अत्यन्ताभावस्य किं लक्षणम्?

**त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। यथा**

---

न्यायबोधिनी।

अत्यन्ताभावं निरूपयति—त्रैकालिकेति। ( प्रागभावाप्रतियो-

पदकृत्यम्।

प्रागभावं लक्षयति—**अनादिरिति**। घटादिवारणाय प्रथमदलम्। परमाणुवारणाय द्वितीयदलम्। पुनः प्रागभावः कस्मिन्कालेऽस्तीत्यत आह—**उत्पत्तेरिति**। कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणं वर्तते इत्यर्थः।

ध्वंसं लक्षयति—**सादिरिति**। घटादिवारणाय अनन्त इति। आत्मादिवारणाय सादिरिति। **उत्पत्तीति**। कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः। स च 'ध्वस्तः' इति प्रत्ययविषयः।

अत्यन्ताभावं लक्षयति—**त्रैकालिकेति**। त्रैकालिकत्वे सति संसर्गावच्छिन्न-

विरला।

सम्बन्धविषया विशिष्टबुद्धित्वात् दण्डीतिविशिष्टबुद्धिवदित्यनुमानेन संयोगादिबाधसहकृतेन समवायसिद्धिरिति॥

सामान्यतो लक्षितस्य विभक्तस्य चाभावस्य लक्षणान्याह **अनादिरिति**। अनादित्वम्—उत्पत्तिशून्यत्वम्। सान्तत्वं विनाशप्रतियोगित्वम्। तथा चोत्पत्तिशून्यत्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य लक्षणं बोध्यम्। अत्र सर्वत्र पदकृत्यं पदकृत्ये द्रष्टव्यम्। ननुप्रागभावः कुत्र वर्तते अत आह **उत्पत्तेरिति**। स्वप्रतियोगिसमवायिनि कार्योत्पत्तेः पूर्वं वर्तते इत्यर्थः। **अत्र प्रश्नः**—अथ प्रागभावे किं मानमिति चेत्। **उत्तरम्**- इह कपाले घटो भविष्यतीति प्रतीतिरेवेति विद्धि।

ध्वंसाभावं द्वितीयं लक्षयति **सादिरिति**। उत्पत्तिमत्वे सति विनाशप्रतियोगित्वं ध्वंसत्वमित्यर्थः। **कार्यस्येति**। स्वप्रतियोगिसमवायिकरणे वर्तते इत्यर्थः। **अत्र शङ्का**—ध्वंसाभावे किं प्रमाणमिति। **उत्तरम्**—अयं घटो ध्वस्त इति प्रत्यक्षमेवेति।

भूतले घटो नास्तीति ।

अन्योन्याभावस्य किं लक्षणम् ?

तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः यथा घटः पटो नेति ।

न्यायबोधिनी ।

गित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सति अभाववत्त्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम्(१) । (२)वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यम् ) ।

अन्योन्याभावं निरूपयति—तादात्म्येति । अभावत्रयवारणाय विशेषणम् । (३)घटाभाववान्नेति प्रतीतिविषयघटादिवारणाय विशेष्यम् ।

पदकृत्यम् ।

प्रतियोगिताकोऽत्यन्ताभावः । ध्वंसप्रागभाववारणाय त्रैकालिकेति । भेदवारणाय संसर्गेत्यादि ।

अन्योन्याभावं लक्षयति—तादात्म्येति । प्रागभावप्रध्वंसाभाववारणाय तादात्म्येति । अत्यन्ताभाववारणाय तादात्म्यत्वेन सम्बन्धो विशेषणीयः ॥

विरला ।

त्रैकालिकेति । भूतभविष्यद्वर्तमानवृत्तित्वे सति संसर्गाभाववत्त्वमत्यन्ताभावस्य लक्षणं बोध्यम् । अत्र प्रत्यक्षप्रमाणं दर्शयति यथेति ।

चतुर्थमन्योन्याभावमाह तादात्म्येति । तदात्मनो भावस्तादात्म्यं स एव प्रतियोगितावच्छेदकसम्बन्धः, तथा च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाव-

---

(१) आकाशवारणायाभाववत्त्वमिति विशेष्यपदमिति बोध्यम् ।

(२) लघुभूतलक्षणान्तरमाह वस्तुतस्त्विति ।

(३) अभावाभावस्य भावरूपत्वात्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य घटेऽपि सत्त्वादित्यर्थः ।

न्यायबोधिनी ।

**ननु साहश्यादीनामतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आ·**

पदकृत्यम् ।

पदार्थज्ञानस्य परमप्रयोजनं मोक्ष इत्यामनन्ति । स च आत्यन्तिकैकविंशतिदुः-खध्वंसः । आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । दुः·खध्वंसस्येदानीमपि सत्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । मु·क्त्यात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मना·मप्यमुक्तत्वप्रसंगात्स्वसमानाधिकरणेति प्रागभावविशेषणम् । दुःखानि चैकविंशतिः— 'शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति' । दुःखानुषङ्गित्वाच्छरी-रादौ गौणदुःखत्वम् । तथाच 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासि·तव्यः' इति श्रुतेरात्मज्ञानसाधननिदिध्यासनमननसाधनत्वं पदार्थज्ञाने संजाघटीति । एवं च तत्वज्ञाने सति शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः, तेन प्रवृत्त्यनुत्पत्तिः, ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्वज्ञानाभ्यां प्रारब्धक·र्मणां नाशः, ततो जन्माभावः ।

विरला ।

त्वमन्योन्याभावत्वमित्यर्थः । घटे पटतादात्म्यं न किन्तु तादात्म्यसम्बन्धावच्छिन्न·पटनिष्ठप्रतियोगितानिरूपकाभाव एव वर्तते, अयमेव चान्योन्याभावः । येन सम्ब·न्धेन यस्याभाव उच्यते तन्निष्ठप्रतियोगितायां स सम्बन्धोऽवच्छेदकः यथा संयोगेन घटो नास्तीत्यत्र संयोगसम्बन्धावच्छिन्नघटनिष्ठप्रतियोगितानिरूपकोऽभावो ज्ञायते, एवं घटतादात्म्येन पटो नास्तीत्यत्र तादात्म्यसम्बन्धावच्छिन्नपटनिष्ठप्रतियोगितानिरू·पकोऽभावोऽपीति भावः ।

**अत्र प्रश्नः**—अधिकरणस्वरूपत्वेनैव निर्वाहेऽभावपदार्थस्यातिरिक्तस्याङ्गीकारे को हेतुरिति । **उत्तरम्**—घटाभाववद्भूतलमिति प्रत्यक्षप्रतीतौ घटाभावस्य भूतल·रूपत्वे मतुप्प्रयोगानुपपत्तेः भेदस्थल एव तादृशप्रतीतेर्जायमानत्वात्, एवमभावस्या·नतिरिक्तत्वे रसाभाववत्तेज इत्यत्राभावस्य तेजोरूपत्वेन रसाभावस्य प्रत्यक्षं न स्यात् 'येनेन्द्रियेण यद्गृह्यते तन्निष्ठा जातिस्तदभावश्च तेनैव गृह्यत' इति नियमाद्रसाभाव·ग्राहकरसनेन्द्रियस्य तेजोग्रहणेऽसामर्थ्यादिति ॥

पदार्थानुपसंहरति—

**सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ॥**

न्यायबोधिनी ।

ह सर्वेषामिति । **'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम' इति न्यायस्यादिमसूत्र उक्तानां प्रमाणप्रमेयादीनामित्यर्थः । तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मरूपत्वादृश्यस्यापि घटपटादिरूपत्वेन(१) नातिरिक्तत्वमेवमन्येषामप्यूह्यम् ।**

पदकृत्यम् ।

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः ।

विरला ।

**सर्वेषामिति** । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानामित्यर्थः ।

**अन्तर्भावादिति** । तत्र [१] प्रमाणस्य द्रव्यगुणयोरन्तर्भावः । [२]प्रमेयेषु आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थानां रूपादीनां बुद्धेश्च गुणे, मनसो द्रव्ये, धर्माधर्मात्मकप्रवृत्तेर्गुणे, दोषस्य गुणे, प्रेत्यभावस्य संयोगरूपस्य गुणे, फलस्यार्थस्य यथायथं द्रव्यादौ दुःखस्य च गुणेऽपवर्गस्याभावेऽन्तर्भावः । [३]संशयस्य गुणे, कामनाविषयरूप[४]प्रयोजनस्य यथायथं द्रव्यादौ, [५]दृष्टान्तस्य द्रव्यादौ, प्रामाणिकत्वेनाभ्युपगतार्थस्य [६]सिद्धान्तस्य च यथा यथं द्रव्यादौ [७]अवयवस्य [८]तर्कस्य[९] निर्णस्य च गुणे, तत्त्वबुभुत्सुकथारूप [१०]वादस्य विजिगीषुकथात्मक[११]जल्पस्य स्वपक्षस्थापनाहीनकथारूप[११] वितण्डायाश्च शब्दे गुणे, हेत्वाभासानां[१३]यथायथं द्रव्यादौ, अर्थान्तरकल्पनया दूषणाभिधानरूपछलस्य[१४] गुणे, असदुत्तररूप[१५]जातेश्च शब्दे गुणे, निग्रहस्थानानां च [१६]यथायथं द्रव्यादा-

(१) एतद्गृहवत्तद्गृहमपि घटवदित्यत्रैतद्गृहभिन्नत्वविशिष्टतद्गृहवृत्तिघटधर्मरूपत्वादृश्यस्य घटरूपत्वादेवमन्यत्रापि ।

कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नम्भट्टेन विदुषा रचितस्तर्कसङ्ग्रहः ॥

इति श्रीमहामहोपाध्यायान्नम्भट्टविरचितस्तर्कसङ्ग्रहः समाप्तः ।

---

न्यायबोधिनी ।

काणादेति । कणादस्येदं काणादम् । काणादन्यायमते इति द्वन्द्वगर्भकर्मधारयः । कणादप्रोक्तगौतमप्रोक्तमतयोरिति यावत् । (१)कणादन्यायाभिन्नमतद्वयविषयबालसमवेताभिन्नव्युत्पत्तिसिद्धिप्रयोजकान्नंभट्टविद्वन्निष्ठभूतकालीनकृतिविषयाभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ॥

कृष्णावलम्बिनो गाः पुषो गोवर्धनस्तमभ्यर्चयन् ॥
विपुलाभीरसभाजनजनितबुधेन्द्रस्तवाभिरचनाभिः ॥ १ ॥

पदकृत्यम् ।

इत्यादिवचनात् 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतेश्च, सगुणोपासनाकाशीमरणादेरपि तत्वज्ञानद्वारा मुक्तिहेतुत्वम् । अत एव परमेश्वरः काश्यां तारकमुपदिशतीति सारम् ॥

इति श्रीमत्तत्रभवद्गुरुदत्तसिंहशिष्यश्रीचन्द्रसिंहविरचितं पदकृत्यं समाप्तम् ॥

---

विरला ।

वन्तर्भावो वेदितव्यः ॥

यद्यपि कृतिरेषा पुनरुक्त्यादिदोषबहुला स्यात् ।
तदपि भवेदवश्यं बालहिताय विरलैव ॥
पित्रोश्चरणयोरेष गोपीबटुकनाथयोः ।
समर्पितस्तुष्टिदः स्यात् विरलाकुसुमाञ्जलिः ॥

---

(१) कारिकायाशाब्दबोधप्रकारमाह कणादेति ।

# मूलरामायण–सुधानाम्निव्याख्यासहितम् ।

## ( वाल्मीकिरामायण का प्रथम सर्गः )

बनारस गवर्नमेण्ट संस्कृत कालेज की प्रथम परीक्षा में वाल्मीकिरामायण का प्रथमः सर्ग ग्रन्थ नया निर्द्धारित हुआ है विद्यार्थियों के उपयोग के लिए इस पुस्तक में सबसे प्रथम पात्र-परिचयः, सरल संस्कृतमें संक्षिप्तकथा तथा प्रतिश्लोक का अन्वयः, सुधाव्याख्या, समासः, व्याकरण, वाच्यपरिवर्त्तन. कोषः, सारार्थः, भाषार्थः, तथा अन्त में प्रति श्लोकों से शिक्षा तथा परीक्षोपयोगि विविध प्रश्न संग्रह भी रक्खा गया है जिससे विद्यार्थियों को इस पुस्तक के पढ़ने से परीक्षा देने में समस्त कठिनाई दूर हो गई हैं ऐसी उत्तम पुस्तक आज तक दूसरी नहीं छपी है । मूल्य भी बहुत अल्प ।-) पांच आना मात्र है ।

# मूलरामायण महाभारतीयशीलनिरूपणाध्यायसहितम् ।

उपरोक्त सुधानाम्निव्याख्या सहित संपूर्ण विषयों से युक्त पृथक् संस्करण भी मिलता है । मूल्य ।=) छः आना मात्र ।

# रघुवंशमहाकाव्यम्–सुधानाम्निव्याख्यासहितम् ।

प्रत्येक श्लोकमें क्रमशः अवतरण-श्लोक, मल्लिनाथकृत सञ्जीविनी टीका-अन्वय-"सुधाव्याख्या"-कोश-समासादि-व्याकरण-वाच्यपरिवर्तन-तात्पर्यार्थ-हिन्दीभाषार्थ तथा जहां तहां पौराणिक कथायें-उपयुक्त टिप्पणीयां-संक्षिप्तकथायें आदि उपयुक्त विषय दिये हैं तथा ग्रन्थ समाप्ति में परीक्षोपयोगी प्रश्नपत्र भी दिये गये हैं । आज तक इतनी उत्तम परीक्षोपयोगि टीकायें तथा मल्लिनाथ कृत सञ्जीविनी टीका सहित का रघुवंश अन्यत्र नहीं छपा । २ से ९ सर्ग का मूल्य लागत मात्र १।)

उपर्युक्त "सुधाव्याख्या" सहित रघुवंश १ से ९ सर्ग का मूल्य १॥)

१ से ४ सर्ग का मूल्य १।)

तथा ६ से १० सर्ग का मूल्य १॥) पृथक् २ संस्करण भी मिलते हैं ।

# पञ्चतन्त्रकम्–सुबोधिनीनाम्निव्याख्या सहितम् ।

## ( अपरीक्षितकारकनामपञ्चमंतन्त्रम् )

आप लोगों को यह पढ़ कर हर्ष होगा कि पञ्चतन्त्र का अपरीक्षित कारक पांचवा तन्त्र ( त्रिस्तनी कथा वर्जित ) प्रथमापरीक्षोपयोगि सुबोधिनी नामकी हिन्दी भाषा टीका, टिप्पणी, तथा मूल संस्कृत श्लोकों की सरल संस्कृत टीका, हर एक कथा का संस्कृत तथा हिन्दी में संक्षिप्त कथासारांश, कथाओं से क्या शिक्षा मिलती है शिक्षा-संग्रह, परीक्षा में किस ढंग से प्रश्न आवेंगे प्रश्नसंग्रह तथा समालोचनात्मक विस्तृव भूमिका सहित परीक्षोपयोगि सबसे सस्ता द्वितीय संस्करण छप कर तैयार है ।

मूल्य लागत मात्र ।-) पांच आना

---

प्राप्तिस्थानम्–श्रीहरिकृष्णनिबन्धभवनम् बनारस सिटी ।

# छन्दःकौमुदी।

## ( हिन्दीभाषाटीकाप्रश्नपत्रसहिता )

## (प्रथमपरीक्षापाठ्यनिर्द्धारितच्छन्दःसंग्रहरूपा)

# गणितकौमुदी

## ( हिन्दीभाषाटीकाप्रश्नपत्रसहिता )

### ( प्रथमपरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम् । )

अत्यन्त हर्ष का विषय है कि सिर्फ थोड़े ही दिनों में "गणितकौमुदी" का प्रथम तथा द्वितीय संस्करण भो हाथों हाथ बिक्री हो जाने से अनेक आवश्यक विषयों के प्रवेश से संशोधित तथा परिवर्द्धित तृतीय संस्करण भी छपकर प्रस्तुत हो गया । जिसे हम अपने प्रिय पाठकों के करकमलों में समर्पण करनेका सुअवसर प्राप्त कर रहे हैं ।

गवर्नमेंट संस्कृत कालेज बनारस तथा बिहार की प्रथमा परीक्षा में निर्द्धारित गणित का यह "गणितकौमुदी" संग्रह बहुत ही उपयोगी हुआ है । प्रस्तुत ग्रन्थ में संख्या की उत्पत्ति, गणनक्रम, जोड़, बाकी, गुणा, भाग, आदि विषयों के लक्षण तथा अभ्यास के लिये भिन्न २ प्रकार के अनेक उदाहरण, देश काल भेद से अनेक प्रकार के मान, तथा भिन्न २ परिभाषायें भी रक्खी गयी हैं । इस संस्करण में बहुत से विषय नवीन सन्निविष्ट किये गये हैं ।

गणितशास्त्र में अङ्कों के बारे में जो कुछ विशिष्ट सिद्धान्त हैं, जिनको कि गणित शास्त्र के धुरन्धर विद्वान् ही जानते हैं, वे विषय भी अत्यन्त सरल भाषा में उदाहरण सहित इस संस्करण में रक्खे गये हैं तथा अङ्कों के सङ्केत भी सोदाहरण दिये गये हैं । पारिभाषिक शब्दों का विवरण भी साथ में देदिया गया है। केवल एक इसी ग्रन्थ का अच्छी तरह अभ्यास करने से परीक्षा में तो सफलता होगी ही, व्यावहारिक जगत् में भी सब प्रकार के हिसाबों का सामान्य ज्ञान होगा, तथा संस्कृत के छात्रों पर व्यवहारानुपयोगिता का जो कलङ्क लगाया जाता है वह भी अंशतः मिट जायगा ।

जो छात्र आगे मध्यमा परीक्षा में ज्यौतिष विषय लेना चाहें, उनको भी इस ग्रन्थके अभ्यास से अग्रिम पाठ्यग्रन्थों की तैयारी में बहुत सहायता मिलेगी ।

प्रथमा परीक्षा के विद्यार्थियों के लिए यह पुस्तक कितनी सरल तथा परीक्षा में सफलता प्राप्त होने योग्य हुई इसका सबसे उत्तम प्रमाण प्रथम तथा द्वितीय संस्करण छपते ही हाथो हाथ बिक्री हो जाना, तथा जिन २ विद्यार्थियों ने इस पुस्तक का अध्ययन कर परीक्षा दी उन्हें परीक्षामें पूरी सफलता प्राप्त करना ही है। काशी तथा अन्य स्थानों के अनेक विद्वानों ने इस ग्रन्थ से पूर्ण सहानुभूति रखते हुए अनेक प्रमाण पत्र भी दिए हैं ।

ग्रन्थ अत्यन्त उत्तम अक्षरों में सुन्दर मोटे कागज पर साफ छपा है ।

मूल्य भी लागत मात्र ।=) छः आना है ।

---

प्राप्तिस्थानम्—श्रीहरिकृष्णनिबन्धभवनम् बनारस सिटी ।